## सूचना ॥

अनेक प्रकार की पुस्तकें इस यंत्रालयमें मुद्रितहुई हैं उनमें से जितने पुराण हैं उनसे चुनकर कुछ पुस्तकें नीचे लिखीजाती हैं जिनमहाशयों को इसमें से किसी पुस्तककी आवश्यकता हो वे इस प्रेसके मेनेजरको पत्रलिखकर मँगालें तथा पुस्तकों का जो सूचीपत्र छपाहै वह भी मँगाकर देखलें ॥

### देवीभागवत भाषा ॥

इसका उल्था पंडित महेशदत्त सुकुलने कियाहै--इसमें मुख्य करके श्रीदेवीजीके पाठ आदिक का विस्तार और सर्व प्रकारकी शक्तियों का कथन और उनके अवतार, मंत्र,तंत्र, यंत्र, कवच, कीलक, अर्गला,पूजा, स्तोत्र, माहात्म्य, सदाचार,प्रातकृत्य,रुद्राक्ष महिमा,गायत्री और देवियों के पुरश्चरण का वर्णन, सन्ध्योपासन,ब्रह्मयज्ञादि असंख्य तंत्र मंत्र रूप विषयहैं भाषा ऐसी स्पष्ट है कि साधारण लोग भी समझ सक्ते हैं ॥

### लिंगपुराण ॥

इसका उल्था छापेखानेके बहुत सर्चसे जयपुर निवासि पंडित दुर्गाप्रसादजीने भाषामें किया है--जिसमें अनेक प्रकारके इतिहास,सूर्यवंश,चन्द्रवंशका वर्णन, ग्रह नक्षत्र,भूगोल और खगोलका कथन, देव, दानव, गन्धर्व,यक्ष,राक्षस और नागादिकी उत्पत्ति इत्यादि बहुतसी कथायेंहैं ॥

# भूमिका

श्रीमाधवोजयतु । जोकि अनादि कालसे अनादि शक्ति श्रीभगवती दुर्गाके उपासक बहुधा सब मनुष्य हैं और मुख्यकर इस अवध मण्डल में तो सबही शक्ति के आराधन करनेवाले हैं परन्तु किसी का ध्यान उस के मुख्य ग्रन्थोंके प्रकाश करने में नहीं हुआ और इसी से बहुधा लोग उसके चरित्रोंको नहीं जानते जिनसे उनकी रुचि उस अनादि शक्ति की भक्तिमें हो इस हेतु से सब छोटेबड़ों का हित विचार इक्ष्वाकुवंशी अर्थात् रघुवंशी श्रीमन्महाराजाधिराज श्रीरामचन्द्रजी जिनका यश प्रताप तेज बीरता और उदारता नवखण्ड पृथ्वीमें विदित है और सदैवसे जिनके कुलमें बड़े २ तेजस्वी प्रतापी महाराजा चक्रवर्त्ती होतेआये हैं उनकी कृतज्ञता और कृपालुता चलीआती है उसी घराने और राज्यके अधिकारी क्षात्रियकुलभूषण राजशिरोमणि यशस्वी प्रतापी दयावान् पुण्यवान् अतिउदार जिनके काशी आदि बड़े २ तीर्थस्थानों में अत्युत्तम शिवालय बने हैं और देश २ में उदारताकी कीर्त्ति विख्यात है और परमशाक्त हैं जिन्होंने प्रथम तो

श्रीदेवीभागवत सटीक बहुत शुद्धतापूर्व्वक छपवाकर हज़ारों पुस्तकें पण्डित ब्राह्मणों को सत्कारपूर्व्वक दक्षिणा सहित दानकीं ऐसे प्रतापी गढ़ अमेठी आदि के स्वामी राजा माधवसिंह प्रतापी ने अब फिर कृपालुता प्रकटकर श्रीदेवीगीता जिसको कोईभी नहीं जानता उसको प्रकाश करने और लोगों का उद्धार करनेकेलिये पण्डित महेशदत्त शुक्क को आज्ञादी कि तुम इसको श्री देवीभागवतसे पृथक्कर बहुत शुद्धकरो और अवध अख़बार के सम्पादक मुन्शी नवलकिशोर साहब से फर्माया कि आप इसको बहुत पुष्ट अक्षरों में जिसका वृद्धभी बे परिश्रम पाठ करसकें बहुत उत्तम काग़ज़पर छपवाइये सो उक्त महाराजा की आज्ञानुसार पण्डित महेशदत्त शुक्कने बहुतसा परिश्रम करके अत्यन्त शुद्ध किया और पूर्व्वोक्त मुन्शी साहब ने उत्तम पुष्ट अक्षरों में लिखवाकर छपवाई ॥

इति

श्रीदेव्यैनमः ॥ शक्त्याश्चयंजगत्सर्वंनित्यासच्चित्स्वरूपिणी । अद्वितीयात्रीजभूताव्यापिकासर्वंवस्तुषु १ तत्कलालेशभाजस्तुब्रह्मविष्णुशिवादयः । उत्पत्तिपालनाभावकर्तृत्वे प्रभविष्णवः २ तद्भक्त्यद्दढपाकेनकोशलेदेशउत्तमे । सार्थमाधवसंज्ञस्तुराजाभूद्रघुवंशजः ३ देवीमाहात्म्यश्रवणे श्रद्धाजातामहात्मनः । पुण्यपुंजातिरेकेण देवीगीतामतौस्थिता ४ कालानुकूलताभावात्साहिक्षत्रियपुंगवः । मुन्शीनवलपूर्वेणकिशोरेणचसंगतः ५ तेनोक्तंममप्रार्थ्यंहिदेवीगीताविमुद्रणम् । तदाज्ञयासमारम्भोजातोगीताविमुद्रणे ६ अशोधितंमुद्रणंचलोकेनप्रचरेदिति । कालीपत्संज्ञकेनाथद्विजवर्येणशोधितम् ७ शोधितामुद्रितागीताजातासिद्धिमुपेयुषी । अर्थतोलिपितोवापि तत्तुल्यानैवविद्यते ८ ॥

ति

श्रीगणेशायनमः॥श्रीलक्ष्मींमातरं रंगनाथाख्यंपितरंगुरुम्। नीलकंठःप्रकुरुतेनत्वागीताविमर्शिनीम् १
चतुः सप्रतिपद्यैस्तुपार्वत्याख्यंपरंमहः। हिमालयेप्रादुरभूदितिसम्यगिहोच्यते। पूर्वाध्यायेपुनश्चहिमवत्पृ
ष्टेप्रादुरासीत् तुतन्महइत्युक्तंतत्कथां पृच्छतिधराधराधीशेति धराधराः पर्वतास्तेषामधीशोहिमालयः

जनमेजयउवाच धराधराधीशमौलावाविरासीत्परंमहः। यदुक्तंभवतापूर्वंविस्तरात्तद्व
दस्वमे १ कोविरज्येतमतिमान् पिबन्शक्तिकथामृतम्। सुधांतुपिबतांमृत्युःसनैतच्छ्रृ
ण्वतोभवेत् २ व्यासउ० । धन्योसिकृतकृत्योसि शिक्षितोसिमहात्मभिः। भाग्यवान
सियद्देव्यानिर्व्याजाभक्तिरस्तिते ३ शृणुराजन्पुरावृत्तंसतीदेहेग्निभर्जिते। भ्रांतःशिव
स्तुबभ्रामक्वचिद्देशेस्थिरोभवत् ४ प्रपंचभानरहितः समाधिगतमानसः। ध्यायन्देवी
स्वरूपंतुकालंनिन्येसआत्मवान् ५ सौभाग्यरहितंजातं त्रैलोक्यंसचराचरम्। शक्ति
हीनंजगत्सर्वं साब्धिद्वीपंसपर्वतम् ६ आनंदः शुष्कतांयातः सर्वेषांहृदयांतरे। उदा
सीनाः सर्वलोकाश्चिंताजर्जरचेतसः ७ सदादुःखोदधौमग्नारोगग्रस्तास्तदाभवन्।

तस्यमौलावित्यर्थः १ वक्तुरुत्साहार्थंकथावणेस्वोत्साहं दर्शयति कोविरज्येतेतिसुधांबुपिबताममराणांयो
मृत्युः सदेवीकथामृतश्रवणतोनैवभवेदित्यर्थः २। ३। ४। ५। सौभाग्यरहितमैश्वर्यरहितं तदा पराशक्तेः
पुण्यश्लोकायादेव्याःपालयित्र्याजगन्मातुरभावाज्जातमित्यर्थः॥ ६। ७। महाअपिविपरीतगतयः

शासनकर्त्र्याः सत्यादेव्या अभावाज्जाता इत्यर्थः ८।९ ब्रह्मणादत्तोवरोयस्मैताहृशास्तस्मिन्नेवसन्धौता
रकासुरोभवदित्यर्थः कोसौब्रह्मणावरोदत्तस्तदाहशिवौरसास्त्विति १०।११।१२।१३।१४।१५ अस्माकम

ग्रहाणांदेवतानांचवैपरीत्येनवर्त्तनम् ८ अधिभूताधिदेवानांसत्यभावान्नृपाभवन् ।
अथास्मिन्नेवकालेतुतारकाख्योमहासुरः ९ ब्रह्मदत्तवरोदैत्योभवत्त्रैलोक्यनाशकः ।
शिवौरसस्तुयःपुत्रःसतेहंताभविष्यति १० इतिकल्पितमृत्युःसदेवदेवैर्महासुरः ।
शिवौरससुताभावाज्जगर्जचननंदच ११ तेनचोपद्रुताःसर्वेस्वस्थानात्प्रच्युताःसु
राः।शिवौरससुताभावाच्चिंतामापुर्दुरत्ययाम् १२ नांगनाशंकरस्यास्तिकथंतत्सुत
संभवः।अस्माकंभाग्यहीनानांकथंकार्यंभविष्यति १३ इतिचिंतातुरास्सर्वेजग्मुर्वै
कुण्ठमण्डले ।शशंसुर्हरिमेकांतेसचोपायंजगादह १४ कुतश्चिन्तातुराःसर्वेकाम
कल्पद्रुमाशिवा ।जागर्त्तिभुवनेशानीमणिद्वीपाधिवासिनी १५ अस्माकमनयादेवत
दुपेक्षास्तिनान्यथा ।शिक्षैवेयंजगन्मात्राकृतास्मच्छिक्षणायच १६ लालनेताडनेमा
तुर्नाकारुण्यंयथार्भके ।तद्वदेवजगन्मातुर्नियंत्र्यागुणदोषयोः १७ अपराधोभव

नयादपरायादेवभगवत्या उपेक्षास्तिसाचोपेक्षानोस्मन्नाशायाकिन्त्वेताद्दृशोस्माभिरपराधोनकर्तव्य इति शिक्ष
णायेत्यर्थः १६ तत्र दृष्टान्तमाह लालने इति अर्भकेबाले १७ यद्यप्यपराधिनो वयं तथापि तां मातरं ज

गज्जननीं विनाकोपरः सहेतास्मदपराधं पदे पदे जायमानमित्यर्थः १८।१६ स्वजाययालक्ष्म्यासहदेव्या आराधनार्थं विष्णुरपिदेवैः सहनिजंगामेत्यर्थः२०।२१ अंबा प्रीत्यर्थं यज्ञानानाविधास्तृतीयस्कन्धोक्ताज्योति ष्टोमादयश्चतद्विधायज्ञाअंबायज्ञं चक्रिरेइत्यर्थःतृतीयादि व्रतानिहिमालयंप्रतिभगवत्यावक्ष्यमाणानि २२ नामपरायणाः देवीनामजापिन इत्यर्थः सूक्तपराः अहं रुद्रेभिरित्यादि देवीसूक्तजापिन इत्यर्थः नाम पारा

त्यैवतनयस्यपदेपदे । कोपरःसहतेलोकेकेवलंमातरंविना १८ तस्माद्यूयंपरांवांतां
शरणंयातमाचिरम् । निर्व्याजयाचित्तवृत्त्यासावःकार्यंविधास्यति १६ इत्यादिश्यसु
रान्सर्वान्महाविष्णुःस्वजायया । संयुतोनिजंगामाशुदेवैःसहसुराधिपः २० आजगा
ममहाशैलंहिमवंतंनगाधिपम् । अभवंश्चसुराःसर्वेपुरश्चरणकर्मिणः २१ अंबायज्ञ
विधानज्ञाअंबायज्ञंचचक्रिरे । तृतीयादिव्रतान्याशुचक्रुःसर्वेसुरानृप २२ केचित्स
माधिनिष्णाताःकेचिन्नामपरायणाः । केचित्सूक्तपराःकेचिन्नामपारायणोत्सुकाः २३ मं
त्रपारायणपराःकेचित्कृच्छ्रादिकारिणः। अंतर्यागपराःकेचित्केचिन्न्यासपरायणाः २४

यणं तंत्रराजादि तंत्रेपूक्तं कालरीत्या पारायणं तस्मिन्नुत्सुकानि निष्णाताः केचिदित्यर्थः२३ मंत्रपाराय णं मायाकुंडलनीक्रियामधुमती शुद्धाचकालीकला। मातंगीविजयाजयाभगवतीदेवीशिवाशांभवीतिश्लो कोक्तरीत्या भुवनेश्वरीपारिजातेस्पर्धाकृतं तत्परातन्निष्णाताःकेचिदित्यर्थःकृच्छ्रादिव्रतं कृच्छ्रचान्द्रायणा

दिकं अन्तर्यागः प्रपंचयागः प्राणाग्निहोत्रं च प्रपंचसारे उक्तं तत्पराः केचिदित्यर्थः २४ हृल्लेखया मायाबीजमंत्रेण भुवनेश्वरीमंत्रेणेत्यर्थः २५ भृगोर्दिने भृगुवासरे स तस्मिन्नेवाकाशे स्त्रियमाजगाम ब हु शोभमानामुमांहैमवतीमित्यादि श्रुतिबोधितं तन्महः शाक्तं महः प्रादुर्बभूवेत्यर्थः २६ वेद चतुष्टये न

हृल्लेखयापराशक्तेःपूजांचक्रुरतंद्रिताः । इत्येवंबहुवर्षाणिकालोगाज्जनमेजय २५
अकस्माच्चैत्रमासीयनवम्याञ्चभृगोर्दिने । प्रादुर्बभूवपुरतस्तन्महःश्रुतिबोधितम् २६
चतुर्दिक्षुचतुर्वेदैर्मूर्त्तिमद्भिरभिष्टुतम् । कोटिसूर्यप्रतीकाशंकोटिचन्द्रसुशीतलम् २७वि
द्युत्कोटिसमानाभमरुणंतत्परंमहः । नैवचोर्ध्वंनतिर्यक्चनमध्येपरिजग्रभत् २८ आ
द्यंतरहितंतत्तुनहस्ताद्यंगसंयुतम् । नचस्त्रीरूपमथवानपुंरूपमथोभयम् २९ दीप्त्यापि
धानंनेत्राणांतेषामासीन्महीपते । पुनश्चधैर्यमालंव्य यावत्तेददृशुःसुराः ३० तावत्तदे
वस्त्रीरूपेणाभाद्दिव्यमनोहरम् । अतीवरमणीयांगींकुमारींनवयौवनाम् ३१ उद्यत्पीनंकु
चद्वंद्वानिंदिताम्भोजकुड्मलाम् । रणत्किंकिणिकाजालसिंजन्मंजीरमेखलाम् ३२ कनका

चतुर्दिक्षुस्थितेन सेवितमित्यर्थः २७ अरुणमारक्तमनुग्रहार्थं स्वीकृतरजोगुणवत्वात् एतद्रूपप्रतिपादिकां श्रुतिंपठंति नैवंचोर्ध्वमितिपरिजग्रभत् स्थानत्रयेपि न परिछिन्नमित्यर्थः २८ अथोभयंनपुंसकमपिनेत्यर्थः २९ प्रथमंतस्तस्यदीक्षानेत्रपिधानं जातं पश्चात्तदेवमहः स्त्रीरूपेणाभात् प्रकाशं प्रापेत्यर्थः ३०।३१ उद्यदा

विभ्रंवद्यत्पीनं कुचद्वंद्वं तेन निंदिते कमलकुड्मले यस्याः रणच्छब्दायमानं यत् किंकिणिकाजालं तेन सिंजन्ती शब्दायमाने मंजीरमेखले नूपुरकांचो भूषणे यस्याः३२ गलबन्धः कंठभूषणं ३३ तनुकेतके वा लंकेतकपत्रेतिंश्वेतेसंराजन्यो नीलभ्रमरस्तद्वद्दतिनीले कुन्तले कर्णकपोलमध्यस्थौ केशौ यस्याः ३४

गदकेयूरग्रैवेयकविभूषिताम्।अनर्घ्यमणिसंभिन्नगलबंधविराजिताम्३३तनुकेतकसं
राजन्नीलभ्रमरकुंतलाम् । नितंबबिंबसुभगांरोमराजिविराजिताम् ३४ कर्पूरशकलो
न्मिश्रतांबूलपूरिताननाम्। कनत्कनकताटंकविटंकवदनांबुजाम् ३५ अष्टमीचन्द्रबिं
बाभललाटामायतभ्रुवम्।रक्तारविंदनयनामुन्नसांमधुराधराम् ३६कुंदकुण्डलदंताभां
मुक्ताहारविराजिताम्। रत्नसंभिन्नमुकुटांचन्द्ररेखावतंसिनीम् ३७मल्लिकामालतीमा
लाकेशपाशविराजिताम्। काश्मीरविंदुनिटलांनेतत्रयविलासिनीम्३८पाशांकुशव
राभीतिचतुर्वाहुंत्रिलोचनाम् । रक्तवस्त्रपरीधानांदाडिमीकुसुमप्रभाम् ३९ सर्वशृङ्गार
वेषाढ्यांसर्वदेवनमस्कृताम्।सर्वाशापूरिकांसर्वमातरंसर्वमोहिनीम्४०प्रसादसुमुखी
मंबांमंदस्मितमुखांबुजाम्। अव्याजकरुणामूर्त्तिंददृशुःपुरतःसुराः ४१ वक्तुंनाशक्नुव

कनंतौदीप्यमानौ यौ कनकताटंकौ ताभ्यांविटंकं सुन्दरं वदनाम्बुजंयस्याः३५ अष्टमीचन्द्रोर्धचन्द्रः उन्नसां उन्नतनासिकां ३६। ३७ निटलं ललाटं ३८ त्रिलोचनामिति पुनरुक्तिर्लोचनानामतिसौंदर्यबोध

नार्था ३९।४०।४१ यतोवाष्पसंरुद्धनिस्वनास्ततोवक्तुं नाशक्नुवन्नित्यर्थः इतिकर्तव्यतायांमूढाः सर्वे विलोकनं कृतवन्त एवस्थिता इत्यर्थः ४२।४३ नमोदेव्यै इति वैदिकोमन्त्रः प्रकृत्यै प्रकृतिश्चप्रातिज्ञा दृष्टान्तानुपरोधादिति सूत्रप्रतिपाद्य साम्यावस्थामायोपाधिकब्रह्मरूपिण्यै भद्रायै सकलकल्याणगुणरत्ना करायै नियताः संयुताः ४४ तामग्निवर्णामिति अद्यमपि ऋङ्मन्त्रः अग्निसमानारुणवर्णांतपसाज्ञाने नज्वलंतींदीप्यमानां सर्वज्ञामित्यर्थः तथा च श्रुतिः तपसाचीयतेब्रह्मेति मुंडके वैरोचनीं विशेषेण दीप्तां कर्मफलेषु निमित्तेषु ब्राह्मणादिभिर्जुष्टां सेवितां दुर्गांमष्टांगयोगात्मकदुःखरूपायासेनप्राप्यां ज्ञानेन सुतर

न्किंचिद्वाष्पसंरुद्धमुस्वराः । प्रेमाश्रुलोचनाःसर्वेविलोचनपराःस्थिताः ४२ कथंचि
त्स्थैर्यमालंब्य भक्त्याचानतकंधराः । प्रेमाश्रुपूर्णनयनाः तुष्टुवुर्जगदंबिकाम् ४३
श्रीदेवाऊचुः नमोदेव्यैमहादेव्यैशिवायैसततंनमः । नमःप्रकृत्यैभद्रायैनियताःप्रण
ताःस्मताम् ४४ तामग्निवर्णांतपसाज्वलंतींवैरोचनींकर्मफलेषुजुष्टाम् । दुर्गांदेवीं

सितरणयोग्ये संसारेतरसेतरणायतस्यैदुर्गायैनमोस्त्वित्यर्थः तस्यै इति शेषः यद्वा अग्निशब्देनाग्निबीजं रेफोगृह्यते स रकारो वर्णो यस्यामेवास्ति तां तपः शब्दो मायावाचकस्तेन तुरीयस्वरईकारोगृह्यते तेन ज्वलंतीं तद्युक्तामित्यर्थः विरोचनः सूर्यस्तेन तद्बीजं रेफो गृह्यते सूर्यस्यबिंद्वात्मकपरमेश्वरत्वेन विन्दोश्च हकारात्मत्वेन प्रपंचसारे तृतीयचतुर्थपटलयोरुक्तत्वात् तेन हकारयुक्तामित्यर्थः तथा च मायाबीजरूपिणीं दुर्गां शरणमहमित्यादि पूर्वेण समानार्थं नारायणोपनिषद्भाष्ये तुतां दुर्गां देवीं शरण

महं प्रपद्ये कीदृशीमग्निसमानवर्णां तपसा स्वकीयसन्तापेन ज्वलंतीमस्मच्छत्रुं दहंतीं विशेषेण रोचते स्व
यमेवप्रकाशते इति विरोचनः परमात्मातेन दृष्टत्वाद्वैरोचनीं कर्मफलेषु स्वर्गपशुपुत्रादिषु निमित्त
भूतेषु जुष्टासुपासकैः सेवितां हे सुतरसिसुष्टु संसारतरणहेतो हे देवि तरसेतारयित्र्यै तुभ्यंनमोस्त्वित्य
र्थः इत्युक्तमाधवाचार्यैः ४५ देवींवाचमितिदेवाः प्राणाः वाचं देवीं द्योतमानां वाचं वैखरीरूपामजनयंतो
त्पादितवन्तस्तां विश्वरूपाः बहुरूपाः पशवोस्मदादयो वदन्ति सर्वव्यवहारसिध्यर्थं सेयं सर्वव्यवहारो
पयोगिनीधेनुः कामदुघा मन्द्रामादयित्री प्रतिष्ठामान दानादिना इषमूर्जंदुहाना अन्नबलदात्री वाग्रूपा

शरणमहंप्रपद्ये सुतरसितरसेनमः ४५ देवींवाचमजनयंतदेवास्तांविश्वरूपाःपशवो
वदंति । सानोमंद्रेषमूर्जंदुहानाधेनुर्वागस्मानुपसुष्टुतैतु ४६ कालरात्रींब्रह्मस्तुतां
वैष्णवींस्कन्दमातरम् । सरस्वतीमदितिंदक्षदुहितरंनमामःपावनांशिवाम् ४७ म
हालक्ष्म्यैचविद्महेसर्वशक्त्यैचधीमहि तन्नोदेवीप्रचोदयात् ४८ नमोविराट्स्वरूपि

भगवती नोस्मान् सुष्टुता सतीउपैतु प्राप्नोत्वित्यर्थः अयमपि ऋङ् मन्त्र एव ४६ कालरात्रीमिति अथ
मपि देव्यथर्व शिरस्थोमन्त्रः सर्वमारकस्यापि कालस्यरात्रीं नाशिकेत्यर्थः प्रलये कालस्यापिनाशात्
ब्रह्मस्तुतां मधुकैटभवधसमये ब्रह्मणास्तुतां वैष्णवीं विष्णुशक्तिं लक्ष्मीं स्कन्दमातरं पार्वतीं शिवशक्तिं
आदितिं देवमातरं दक्षदुहितरं सती नाम्नीं एतादृशीं नानारूपधरां शिवां भुवनेश्वरीं पावनीं नमाम
इत्यर्थः ४७ महालक्ष्म्यै चेति इयमपि देव्यथर्वशिरःस्थागायत्री तत्र चतुर्थी द्वितीयार्थे महालक्ष्मीं विद्म

हे जानीम इत्यर्थः तथा सर्वशक्तिं धीमहि ध्यायम इत्यर्थः तादिति विलुप्तसप्तम्यंतं तेन तत्र ज्ञाने ध्याने च नोस्मान् सा देवी प्रचोदयात्प्रेरयत्वित्यर्थः ४८ चतुष्पात् ब्रह्मात्मिकां नमस्करोति नमोविराडिति४६

एयैनमःसूत्रात्ममूर्त्तये । नमोऽव्याकृतरूपिएयैनमःश्रीब्रह्ममूर्त्तये ४९ यदज्ञानाज्जगद्भातिरज्जुसर्पस्रगादिवत् । यज्ज्ञानाल्लयमाप्नोतिनमस्तांभुवनेश्वरीम् ५० नमस्तत्पदलक्ष्यार्थांचिदेकरसरूपिणीम् । अखण्डानन्दरूपांतांवेदतात्पर्यभूमिकाम् ५१ पंचकोशातिरिक्तांतामवस्थात्रयसाक्षिणीम्। नमस्त्वंपदलक्ष्यार्थांप्रत्यगात्मस्वरूपिणीम् ५२ नमःप्रणवरूपायैनमोह्रींकारमूर्त्तये । नानामंत्रात्मिकायैतेकरुणायैनमोनमः ५३ इतिस्तुतातदादेवैर्मणिद्वीपाधिवासिनी । प्राहवाचामधुरयामत्तकोकिलनिस्वना ५४ देव्युवाच ॥ वदंतुविबुधाःसर्वेंगदर्थमिहसंगताः । वरदाहंसदाभक्तकामकल्पद्रुमास्मिच ५५ तिष्ठंत्यांमयिकाचिंतायुष्माकंभक्तिशालिनाम् । समुद्धरामिमद्भक्तान्दुःखसंसारसागरात् ५६ इतिप्रातिज्ञांमेसत्यांजानीथविबुधोत्तमाः । इतिप्रेमाकुलांवाणींश्रुत्वासंतुष्टमानसाः ५७ निर्भयानिर्जराराजन्नूचुर्दुःखंस्वकीयकम् । देवाऊचुः ॥ नाज्ञातांकिंचिदप्यत्रभवत्यास्तिजगत्त्रये ५८ सर्वज्ञयासर्वसाक्षिरूपिएयापरमेश्वरि । तारकेणासुरेंद्रेणपीडिताःस्मोदिवानिशम् ५९ शिवांगजाद्वधस्त

यदज्ञानाद्यत्स्वरूपस्यापरिज्ञानादित्यर्थः ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ ।

शिवां गजाच्छिवौरसात् पुत्रान् ६० सर्वज्ञ पुरत इति सर्वज्ञायास्तवपुरतोस्माभिः पामरैः जनैः किंवक्त
व्यं किं निवेदनयिं त्वं किं न जानासीत्यर्थः एतदुद्देशइति इदं यदुक्तं तदुद्देशतो मुख्यत्वेन यत्स्थितं
तदुक्तं अपरमन्यत् दुःखमस्माकं यदस्तितत्कियत्पर्यंतंवक्तव्यं तत्त्वमेव सर्वज्ञातर्कयजानीहीत्यर्थः६१ मुख्य
मभिलषितं प्रार्थयन्ति सर्वदेति देहहेतवे देहाभिमाननिमित्तमपरं प्रार्थनीयमित्यर्थः ६२ या हिमाल

स्यनिर्मितोब्रह्मणाशिवे । शिवांगनातुनैवास्तिजानासित्वंमहेश्वरि ६० सर्वज्ञपुरतः
किंवावक्तव्यंपामरैर्जनैः । एतदुद्देशतःप्रोक्तमपरंतर्कयांबिके ६१ सर्वदाचरणांभोजे
भक्तिःस्यात्तवनिश्चला । प्रार्थनीयमिदंमुख्यमपरंदेहहेतवे ६२ इतितेषांवचःश्रुत्वा
प्रोवाचपरमेश्वरी । ममशक्तिस्तुयागौरीभविष्यतिहिमालये ६३ शिवायसाप्रदया
स्यात्साव:कार्यंविधास्यति । भक्तिर्मच्चरणांभोजेभूयाद्युष्माकमादरात् ६४ हिमाल
योहिमनसामामुपास्तेतिभक्तितः । ततस्तस्यगृहेजन्ममर्माप्रियकरंमतम् ६५ व्यास
उवाच हिमालयोपितच्छुत्वात्यनुग्रहकरंवचः । बाष्पैःसंरुद्धकंठाक्षोमहाराज्ञींवचो
ब्रवीत् ६६ महत्तरंतुकुरुषेयस्यानुग्रहमिच्छसि । नोचेत्काहंजडःस्थाणुःक्वत्वंसच्चि

ये अधुना भविष्यति साशि वाय देयासाशक्तिर्वः कार्यं स्वजन्यपुत्रद्वारातारकासुरबधरूपं करिष्यती
त्यर्थः६३।६४ननु हिमालये किमिति भगवत्यावतारो गृह्यते तत्राह हिमालयोहीति ६५ महाराज्ञीं सर्वेश्वरीं
भुवनेश्वरीं ६६ मद्भक्त्यातुष्टात्वंमद्गृहेवतारं गृह्णासीतिकेवलं मल्लालनार्थमेववस्तुतस्तुयस्यानुग्रह

मिच्छासि तं पुरुषं महत्तरं कुरुषे केवलं स्वेच्छयैवेत्याह महत्तरमिति तथा च श्रुतिः यंकामये तंतमुग्रं कृणोमि तं ब्रूह्माणं तमृषिं सुमेधामिति इदं यदिनास्ति तर्हि तत्राह नोचे दिति कृत्वमतिदूरामनो वाचामपि अगोचरा सच्चिदानन्दरूपिणी ६७ एतादृश्यास्तवपितृत्वं जनकत्वं ममजन्मशतैरनन्तजन्मभिरप्यसंभाव्यं संभावनाविषयमपि न भवति तत्त्वत्पितृत्वं ददासितस्मादिच्छैव केवलं कारणं तनुमम

त्स्वरूपिणी ६७ असंभाव्यंजन्मशतैस्त्वत्पितृत्वंममानघे । अश्वमेधादिपुण्यैर्वा
पुण्यैर्वातत्समाधिजैः ६८ अद्यप्रपंचेकीर्त्तिःस्याज्जगन्मातासुताभवत् । अहोहिमा
लयस्यास्यधन्योसौभाग्यवानिति ६९ येस्यास्तुजठरेसंति ब्रह्मांडानांचकोटयः ।
सैवयस्यसुताजाताकोवास्यात्तत्समोभुवि ७० नजानेस्मत्पितॄणांकिंस्थानंस्यान्निर्मि
तंपरम् । एतादृशानांवासाय येषांवंशोस्तिमादृशः ७१ इदंयथाचदत्तंमेकृपयापूर्णप्रेम
या । सर्ववेदांतसिद्धंचत्वद्रूपंब्रूहिमेतथा ७२ योगंचभक्तिसहितं ज्ञानंचश्रुतिसंमतम्

योग्यतादिकामित्यर्थः तदेवाह अश्वमेधेति ६८ अथ स्वभाग्यं वर्णयति अद्यप्रपंचइति अहो अस्य हिमालयस्य जगन्मातासुताकन्याभवत् धन्योसौभाग्यवानिति प्रपंचे अद्याद्यप्रभृतिकीर्तिः स्यादित्यन्वयः ६९ पराशक्त्यानुग्रहेणप्रेमपूर्णांतःकरणः स्वमुखेनैवस्वभाग्यं पुनर्वर्णयति यस्यास्त्विति कोवा स्यान्नकोपीत्यर्थः ७० येषां वंशे मादृशो भाग्यवानास्ति तेषां किं स्थानं ब्रूह्मलोकाद्यपेक्षयाधिकं किं निर्मितंस्या

त्तन्नजाने इति भावः ७१ पुनः प्रार्थयते इदं यथेति इदमति दुर्लभं त्वात्पितृत्व यथा त्वया करणया दत्तं तथेत्यन्वयः ७२ त्वमेवाहमिति तव मम चाभेदोयेनस्यात्तदित्यर्थः ७३ । ७४ ॥

इतिश्रीदेवीभागवततिलकेगौडपाठानुसारिव्याख्यानेसप्तमस्कन्धेदेवीगीतायामेकोध्यायः ॥ १ ॥

वदस्वपरमेश।नित्वमेवाहंयतोभवेत् ७३ व्यासउवाच इतितस्यवचःश्रुत्वाप्रसन्न मुखपंकजा । वक्तुमारभतांवासारहस्यंश्रुतिगूहितम् ॥ ७४ ॥

इतिश्रीदेवीभागवतेसप्तमस्कंधेदेवीगीतायामेकोऽध्यायः ॥ १ ॥

श्रीदेव्युवाच ॥ शृण्वंतुनिर्जराःसर्वेव्याहरंत्यावचोमम । यस्यश्रवणमात्रेणमद्रू पत्वंप्रपद्यते १ अहमेवासपूर्वंतुनान्यत्किंचिन्नगाधिप । तदात्मरूपंचित्संवित्परब्रह्मै

पंचाशद्भिरथश्लोकैरात्मतत्त्वनिरूपणम् ॥ करोतिजगदंबासास्वमुखेनेतिनोच्यते । हिमालयंपुरस्कृत्य सर्वदेवान् देवीवरवस्तूपदेशंकरोति शृण्वंत्विातिव्याहरंत्याः कथयंत्याः १ अहमेवेति पूर्वंतुसृष्टेस्तुपूर्वमह मात्मरूपिण्येवासबभूवमत्तोन्यत्किंचिदपिनसजातीयविजातीयस्वगतभेदशून्यमात्मतत्त्वनासेत्यर्थः तथा चश्रुतिः आत्मावाइदमेकएवाग्रआसीन्नान्यत् किंचिन्मिषदिति तदात्मरूपमिति तदेवात्मरूपांचित्सांवि

त्परं ब्रह्मैकनामकंभवति सत्यंज्ञानमनंतं ब्रह्मेत्यादिकाजगत्कारणप्रतिपादकश्रुतिषु प्रतिपादिताः शब्दा
स्तस्यैवात्मरूपस्यवाचकाः सतीत्यर्थः २ तथाचसर्ववेदप्रतिपाद्यमात्मरूपमेवासीति समन्वयाध्यायो
क्तः सर्वपदानांब्रह्मण्यात्मरूपे समन्वयउक्तोवेदितव्यइति कीदृक्तदात्मरूपमस्तीतिचेत्तत्राह अप्रतर्क्य
मिति अनुमानाविषयः श्रुत्यैकसमधिगम्यमित्यर्थः अनिर्देश्यश्रुत्यापिजातिगुणक्रियासंज्ञाभिर्निर्देष्टुमश
क्यमित्यर्थः अनौपम्यंयदितत्सदृशोद्वितीयः पदार्थोजगत्यांस्यात्तदातदुपमानेनसआत्मोपमेयः स्यान्न
तुतदस्तितस्मादनौपम्यं अनामयमस्तिजायतेवर्द्धते इत्यादि षड्भावविकारशून्यमित्यर्थः तेषांविकारा
णांदेहोपाधिनिष्ठत्वादस्य चात्मनो देहाभावात्तद्विकाररहितमनामयमेवैतादित्यर्थः एतादृशंनिर्गुणम् क

कनामकम् २ अप्रतर्क्यमनिर्देश्यमनौपम्यमनामयम् । तस्यकाचित्स्वतःसिद्धाश
क्तिर्मायेतिविश्रुता ३ नसतीसानासतीसानोभयात्माविरोधतः । एतद्विलक्षणाका

थंजगत्कारणमिति चेत्तत्राहतस्येति काचिदनिर्वचनीया तस्याममात्यरूपस्यस्वतःसिद्धानादिभूताश
क्तिरस्ति सामायेत्यादिपदैः सर्वश्रुतौ विश्रुता प्रसिद्धास्ति मायांतु प्रकृतिं विद्यान्मायावाण्यान्तरसिंही
त्यादिश्रुतिषु ३ साकीदृशीवर्त्ततेतदाह नसतीति अत्रविरोधत इत्यावृत्त्याज्ञानत्रयेपियोज्यम् ब्रह्मवत्का
लत्रयेवध्यासतीनवर्त्तते ब्रह्मज्ञानेनवाध्यत्वरूपविरोधात् नापि बंध्यापुत्रवदसती व्यावहारिक सत्तावत्व
विरोधात् नाप्युभयात्मा सत्वासत्वविशिष्टाविरुद्धधर्मयोः सत्वासत्वयोरेकत्र सहावस्थानाविरोधाद
तएतत्त्रयविलक्षणाकाचिदनिर्वचनीया वस्तुभूतास्ति सदाअनादिर्यावन्मोक्षस्थापिन्यस्तीत्यर्थः तथाच

तापनीयश्रुतिः मायाचतमोरूपानुभूतेस्तदेतज्जडं मोहात्मकमनंतम् तुच्छमिदरूपमस्य व्यंजिका नित्यनिवृत्तानिमूढैरात्मैवदृष्टास्यसत्वमसत्वंचदर्शयति ४ तत्रदृष्टान्तमाह पावकस्येतिसहजानादि ध्रुवायावन्मोक्षस्थायिनीमायाशक्तिर्ममास्तीत्यर्थः एतेनमायाशक्त्यासाद्वितीयत्वं ब्रह्मणोस्तीतिकथंजग त्सृष्टेः पूर्वंब्रह्मसजातीयविजातीयस्वगतभेदशून्यामिति शंकापरास्ताशक्तेः शक्तानातिरेकात् नहिवह्नि शक्तिर्वह्नेः पृथक्नक्वचित्कदाचिद्गृह्यते किंचिद्द्वितीयः सत्यपदार्थोनास्तित्येकमेवाद्वितीयं ब्रह्मेति श्रुतेरर्थस्तथाचासत्यमाययासाद्वितीयत्वेपिदोषाभावात् ५ नत्वेतादृश्याभुवनेश्वर्यास्तत्रोच्चनीचजीव

चिद्वस्तुभूतास्तिसर्वदा ४ पावकस्योष्णतेवेयमुष्णांशोरिवदीधितिः । चन्द्रस्य
चन्द्रिकेवेयंममेयंसहजाध्रुवा ५ तस्यांकर्माणिजीवानांजीवाःकालाश्चसंचरे ।
अभेदेनविलीनाःस्युःसुषुप्तौव्यवहारवत् ६ स्वशक्तेश्चसमायोगादहंबीजात्मतांग
ता । स्वाधारावरणात्तस्यादोषत्वंचसमागतम् ७ चैतन्यस्यसमायोगान्निमित्तत्वं

सर्जनेवैषम्यनैर्घृण्यदोषआपतेदितिच तत्राह तस्यांकर्माणीतिजीवाः कर्माणिकालाश्चसर्वे अनादयस्ते चसुषुप्तौ यथा प्रतिदिवसव्यवहारोलीनोभवतीति तदासंचरे प्रलयकाले अस्यांमायायामभेदे अलीनाः स्युस्तथाच यथा यथा यस्यजीवस्य कर्माणिभवंति तथा २ मायाफलंदीयत इतिनममवैषम्य नैर्घृण्यदो षगंधोपीतिभावः ६ तादृशीयाममशक्तिर्बीजकर्मकालविशिष्टातयायुक्ताहं निर्गुणापिबीजात्मतां जगत्कारणतां गतास्मीत्याह स्वशक्तेश्चेति ननुतवशक्तिर्यथात्वां नव्यामोहयति तथा जीवशक्तिरपि

जीवनव्यामोहयेत्तथाच युक्ता एवजीवाइति सृष्टिर्निरर्थिकेति चेत्तत्राह स्वाधारावरणादिति स्वं माया तस्या आधार आत्यातस्यावरणादाछादनादस्यामायाया दोषत्वमप्यस्तीत्यर्थः अयंभावः मायायारूप द्वयम् मायाविद्यात्मकमस्ति मायाचा विद्याच स्वयमेवभवतीति श्रुतेस्तत्र प्रथमायाममशक्तिर्माया त्तस्याः स्वाश्रयव्या मोहकारित्वाभावेपि जीवाश्रिता विद्यारूपस्य द्वितीय मायास्वरूपस्य स्वाश्रयव्या मोहकारित्वमस्त्वेवेति तज्जीवमोक्षार्थं सृष्टिः सार्थिकैवेति ७ ननु तथापिलोके कार्यमात्रम् प्रत्युपादान कारणनिमित्त कारणयोरपेक्षास्ति घटादिषु दर्शनाज्जगत उत्पादनकर्त्रीत्वम् त्वेकैवेत्ति कथमेकत्रकारण

चकथ्यते । प्रपंचपरिणामाच्चसमवायित्वमुच्यते ८ केचित्तांतपइत्याहुस्तमःकेचि
ज्जडंपरे । ज्ञानंमायाप्रधानञ्चप्रकृतिंशक्तिमप्यजां ९ विमर्शइतितांप्राहुःशैवशास्त्रवि
शारदाः । अविद्यामितरेप्राहुर्वेदतत्त्वार्थचिंतकाः १० एवंनानाविधानिस्युर्नामानिनि

द्वयसद्भाव इति चेत्तत्राह चैतन्यस्येति समायोगान्मायायाम् समागमाच्चैतन्यस्य मायायांप्रतिबिम्बित स्य चिदाभासस्य निमित्तत्वं निमित्तकरणत्वं कथ्यतइत्यर्थः प्रपंचेति प्रपंचरूपेण परिणामात्समवायित्व मुपादानकारणत्वमुच्यतेमायाया इति शेषः चिदाभासो निमित्तकारणं मायोपादान कारणमिति विभागः अधिष्ठान भूतशुद्ध बिम्बभूतं चैतन्यंतु विवर्त्तो पादान मित्यर्थात् सिद्धम् ८ तस्यामायायाः सद्भावप्र तिपादकानि वचनानि श्रुतिप्रोक्तानि कथयति केचित्तामिति केचिच्छाखिनस्तां मायांतपइति वदन्ती यर्थः तथाच श्रुतिस्तपसाचीयते ब्रह्मेति मुण्डकेतमःकेचिदिति तथाच श्रुतिः नासदासीन्नोसदासीदित्या 

दितमग्रासीत्तमसागुहमग्रे इतितदेतज्जडमिति तापनीये जडत्वमुक्तं स ऐक्षत लोकानुत्सृजा इतिश्रुतौ ज्ञानत्वमुक्तं अजा माया प्रधान प्रकृति शक्तिपरादयः शब्दाश्वेताश्वेतरशाखायांप्रसिद्धा तथाच सर्ववेद सम्मतेयंमायेतिभावः ९ । १० तदोवाह एवमिति मनुमायाया जडत्वं मिथ्यात्वं चकुत इति चेत्तत्राह तस्याइति तस्या दृश्यत्वात्स्वाधिष्ठानज्ञाननाश्यत्वाच्चजडत्वं मिथ्यात्वंचेत्यर्थः यद्यद्दृश्यं तत् जडं यथा घटीत्यादि व्याप्तेः स्वाधिष्ठानज्ञाननाश्यत्वं मिथ्यात्वमिति मिथ्यात्वलक्षणात् ११ एवं मायायाजडत्वं मिथ्यात्वं चोपपाद्य आत्मनस्तदुभयवत्वं नास्तीत्युपपादयति चैतन्यस्येति यदि चैतन्यस्य दृश्यत्वं स्यात्त

गमादिषु । तस्याजडत्वंदृश्यत्वाज्ज्ञाननाशात्ततोसती ११ चैतन्यस्यनदृश्यत्वंदृश्यत्वे
जडमेवतत् । स्वप्रकाशंचचैतन्यं नपरेणप्रकाशितम् १२ अनवस्थादोषसत्वान्न स्वे
नापिप्रकाशितम् । कर्मकर्तृविरोधःस्यात्तस्मात्तद्दीपवत्स्वयम् १३ प्रकाशमानमन्ये

र्हि तज्जडमेव भविष्यति यद्यद्दृश्यं तत्तज्जडमिति व्याप्तेस्तथाच सर्वस्यजडत्वात्प्रकाशकाभावाज्जगदा ध्यप्रसंगात्तस्मान्नतद्दृश्यमित्यर्थः नतुतस्य दृश्यत्वाभावे तदस्तित्वेप्रमाणाभावात्तदभाव एव प्रसज्येतेति चेत्तत्राह स्वप्रकाशंचेति यदिदं चैतन्यं परप्रकाश्यंस्यात्तर्हि स परः केनान्येन प्रकाशितः सोप्यन्यः केन काशित इत्यनवस्थास्यान्नचस्वेनापिस्वंप्रकाशितमेकस्यैव कर्तृत्वकर्मत्व विरुद्धधर्मद्वयवत्वाभात्तस्मा प्रनिच्छतापि यथादीपः स्वयंप्रकाशः परप्रकाश्चेति तद्वन्मदीयं चैतन्यमपि हेपर्वत स्वयंभासमानमन्ये दासूर्यादीनां भासकं विद्धीत्यर्थः तथा च श्रुतिः न तत्र सूर्यो नच चन्द्र तारकेनेमाविद्युतोभांतिकुतोय

मग्निः तमेवभात मनुभातिसर्वंतस्य भासासर्वमिदं विभातीति येन सूर्यस्तपतितेजसेद्धइतिच । १२ । १३ । १४ । यस्माद्धेतोर्नित्यत्वं साक्षिरूपस्योक्तं तमेवहेतुमुपपादयति जाग्रदिति अवस्थात्रयेपि दृश्यस्य पदार्थजातस्य व्यभिचारस्तत्संविदो व्यभिचाराभावश्चयतस्मात्संविदोनित्यतमित्यर्थः ननुसंविदोपि व्यभिचारोस्तुतत्राह संविदइति ॥ योहं जागरितं पश्यामि सएवाहंस्वप्नं पश्यामि सएवाहं सुषुप्तं पश्यामीत्यनुभवे यथावस्थपूयस्याभावोनुभूयतेन तथा कर्हिचित् कदापि संविदोऽभावोनुभूयते तस्मादनिच्छतापि संविदो नित्यत्वमाश्रयणीयमित्यर्थः १५ ननुबौद्धैः संविदोप्यभावोनुभूयते अतएव ते बौ

षांभासकंविद्धिपर्वत । अतएवचानित्यत्वंसिद्धंसंवित्तनोर्मम १४ जाग्रत्स्वप्नसुषुप्त्यादौदृश्यस्यव्यभिचारतः । संविदोव्यभिचारश्च नानुभूतोस्तिकर्हिचित् १५ यदितस्याप्यनुभवस्तर्ह्ययंयेनसाक्षिणा । अनुभूतःसएवात्रशिष्टःसंविद्वपुःपरः १६ अतएवचनित्यत्वंप्रोक्तंसच्छास्त्रकोविदैः । आनन्दरूपताचास्याःपरप्रेमास्पदत्वतः १७

द्धायतसत्तत्क्षणिक मिति व्याप्त्याज्ञानस्याप्य नित्यत्वमिच्छंतीतिचेत्तत्राह यदितस्यापीति यदितस्यसंविद्रूपाभावस्यानुभवस्तर्हियेन साक्षिणा तस्यसंविद्रूपस्यायमभवोनुभूतः सएवात्रसाक्षी संविद्वपुर्ज्ञानशरीरो वशिष्टः इति साक्षिज्ञानं नित्यमेवसर्वैरंगीकर्त्तव्यमित्यर्थः १६ तत्र शास्त्रवेदनुभवं प्रमाणयति अतएवेति अधुनात्मनः सुखरूपत्वमुपपादयति आनन्दरूपतोति अस्याःसंविदोयतः परप्रेमास्पदत्वमनुभूयते तस्मादस्याः संविद आनन्दरूपता सुखरूपतास्तीत्यर्थः नह्यसुखंपरप्रेमास्पदम्भवतीति तदुक्तंसूतसंहि

तायामसुखस्य नहिप्रेमास्पदत्वंपरिदृश्यते १७ तत्रानुभवंदर्शयति मानभूवंहीतिहियतोहमाभूव मिति न किंतु भूयासमेवेति प्रेमसर्वलोकस्यात्मनिस्थितमस्तिनह्येतदात्मनः सुखरूपत्वाभावेसंभवाति तस्मात्प्राणिमात्रस्यानुभवादानन्दात्मतासंविदोस्येवेत्यर्थः आत्मनो संगत्वमुपपादयति सर्वस्येति सर्वप्रपंचस्य मायानिर्मितत्वेनमिथ्यात्वात् मिथ्यापदार्थस्यसर्पादेरज्ज्वादिष्वसंबंधइवात्मनोपि मिथ्याप्रपंचेनासंबंधादसंगत्वंस्पष्टमेवेत्यर्थः ॥ १८ ॥ सर्वस्यपरिछेदकस्य मिथ्यातादेवात्मनः परिछेदोपिनास्तीत्याह अपरिछिन्नेति अतएवसर्वस्यमिथ्यात्वादेवममात्मरूपिराया अपरिछिन्नतापिमतेत्यर्थः अत्रकेचिज्ज्ञान स्वरू

मानभूवंहिभूयासमितिप्रेमात्मनिस्थितम् । सर्वस्यान्यस्यमिथ्यात्वादसंगत्वंस्फुटं मम १८ अपरिछिन्नताप्येवमतएवमताभम । तच्चज्ञानंनात्मधर्मोधर्मत्वेजडतात्मनः १९ ज्ञानस्यजडशेषत्वंनदृष्टंनचसंभवि । चिद्धर्मत्वंतथानास्तिचितश्चिन्नहिभिद्यते २० तस्मादात्माज्ञानरूपःसुखरूपश्चसर्वदा । सत्यःपूर्णोप्यसंगश्चद्वैतजाल

पानात्माकिंत्वात्मनो धर्मोज्ञानमितिवदंतितन्मतं खंडयातितच्चज्ञानामिति यदिज्ञानमात्मधर्म्मः स्यात्तदात्मनोजडत्वापत्तिः ज्ञानातिरिक्तस्यजडत्वात्तस्माज्ज्ञानंनात्मनो धर्मइत्यर्थः १९ किंचज्ञानस्यजडशेषत्वं घटादिष्वदर्शनान्नकुत्रापिदृष्टं नचसंभवतितमः प्रकाशयोस्तयोर्धर्मिधर्मत्वामित्यर्थः नन्वात्मानजडः किंतुचिद्रूपएवेति तद्धर्मत्वं ज्ञानस्यसंभवतीति चेत्तत्राहचिद्धर्मत्वमितिउभयोश्चित्तोरेकत्वादात्मनोज्ञानस्यचाचिद्रूपस्यनधर्मिधर्मभावः संभवतीत्यर्थः भेदेहिसतिधर्मिधर्मभावः यदिपुनर्ज्ञानमात्मनश्चिद्रूपा

द्भिन्नंस्वीक्रियततोहितज्ज्ञानंचितोभिन्नमचिदेवस्यादिति तदुक्तंसूतसंहितायांयज्ञवैभवखंडे चितोन्यशेषताभावाच्चितोचिच्छेषतानहिसएवादि पदार्थानांचेतनत्वप्रशक्तितः चिच्छेषत्वंचनास्त्येवचित्तद्विचन्नहिभिद्यते २ चेदाचिच्चित्स्याच्चित्तोचित्वंविरुध्यते तथाचिच्चेतनस्यापि नशेषत्वमवाप्नुयात् शेषत्वेसति तत् सिद्धिस्तत्सिद्धौशेषताचितः अतोन्यशेषतालोकेचितोभ्रान्त्याप्रतीयतइति २० उपसंहरतितस्मादितितस्मादात्माज्ञानरूपएवेत्यर्थः ॥ २१ ॥ इत्थंसृष्टेः पूर्वासशक्तिकस्यात्मरूपस्यस्थितिमुक्त्वानंतरंतस्मादात्मनः सृष्टिमाहसपुनरितिसआत्मापुनः कामइच्छाकर्मादिदिष्टमनेकविधं आदिनाजीवास्तद्युक्ताया मा

विवर्जितः २१ सपुनःकामकर्मादियुक्तयास्वीयमायया । पूर्वानुभूतसंस्कारात्कालकर्मविपाकतः २२ अविवेकाच्चतत्त्वस्यसिसृक्षावान्प्रजायते । अबुद्धिपूर्वःसर्गोयंकाथतस्तेनगाधिप २३ एतद्धियन्मयाप्रोक्तंममरूपमलौकिकं । अव्याकृतंतदव्यक्तंमाया

याशक्तिस्तयापूर्वंयोजगतोनुभवस्तन्न्योयः संस्कारस्तस्माद्धेतोःकालेनकृतोयः कर्मणांविपाकोनामपरिपाकः फलदानायोन्मुखरूपस्तस्माच्चहेतोरित्यर्थः २२ तत्त्वस्यचतुर्विंशति तत्त्वात्मकस्याविवेकाच्चतस्य तत्त्वस्य पृथक्करणार्थमिति तात्पर्यं सिसृक्षावान् जायतइत्यर्थः यथाबीजमुच्छूनं भवति तथैवपरमात्मापिकालकर्म संस्कारवशात्तत्प्राणितत्तत्कर्म फलभोगसमयेप्राप्तेजगत्सर्जे नेच्छावान् भवतियथाचसुप्तः पुरुषः पूर्वसंस्कारवशेन जागर्त्तितद्वत्परमात्मापि लयरूपस्वापावस्थातो जागर्त्तिप्रलयोहि परमेश्वरस्यस्वापः अबुद्धिपूर्वइति साचेयंस्वापाज्जागरणरूपावस्थान बुद्धिकृतातदानींबुद्धे

रभावात् किंतुप्राणिकर्मसंस्कारकृतेति अयंयःसर्गोजागरणरूपोत्पत्तिः सोबुद्धिकृतोज्ञेयइत्यर्थः २३ एत
त्स्वरूपस्यसर्वोत्तम सित्वमाहएतद्धिपदिङ्इति ममसुख्यमलौकिकंलोकातीतंरूपमित्यर्थः तस्यनामान्तरा
णिवेदोक्तान्याहअव्याकृतामिति २४ । २५ सर्वप्राणिनां कर्माणिघनीभूतानि यस्मिन्सर्वकर्मसाक्षी
त्यर्थः इच्छाज्ञान क्रियाश्रयामिति तथाचश्रुतिः श्वेताश्वतरेनतस्यकार्यंकरणंच विद्यतेनतत्समश्चा
भ्यधिकश्चदृश्यते परास्यशक्तिर्विविधैवश्रूयते स्वाभाविकीज्ञानबलक्रिया चेतिपुराणांतरेपिइच्छा

शवलमित्यपि २४ प्रोच्यतेसर्वशास्त्रेषुसर्वकारणकारणम् । तत्त्वानामादिभूतंचस
च्चिदानन्दविग्रहम् २५ सर्वकर्मघनीभूतमिच्छाज्ञानक्रियाश्रयं । ह्रींकारमंत्रवाच्यंत
दादितत्वंतदुच्यते २६ तस्मादाकाशउत्पन्नःशब्दतन्मात्ररूपकः । भवेत्स्पर्शात्मको
वायुस्तेजोरूपात्मकंपुनः २७ जलंरसात्मकंपश्चात्ततोगंधात्मिकाधरा । शब्दैकगुण
आकाशोवायुःस्पर्शरवान्वितः २८ शब्दस्पर्शरूपगुणंतेजइत्युच्यतेबुधैः । शब्दस्पर्श
रूपरसैरापोवेदगुणाःस्मृताः २९ शब्दस्पर्शरूपरसगंधैःपंचगुणाधरा । तेभ्योभव

ज्ञानक्रियाचैवरौद्रीब्राह्मीतुवैष्णवी त्रिधाशक्तिःस्थितायत्रतत्परंज्योतिरौजतिह्रींकारस्पदमंत्रस्येदमेवं तत्वं
वाच्यमित्याहह्रींकारेति २६ एवमादितत्वस्यह्यस्यमहिमानमुपवर्ण्यतस्यादादितत्वात् ह्रींकारवाच्यादात्म
नआकाशः संभूतइत्यादिक्रमेणअपंचकृत भूतसृष्टिमाह तस्मादाकाशइति अपंचीकृतआकाश उत्प
न्नइत्यर्थः २७।२८।२९। अधुनालिंगदेहोत्पत्तिमाहतेभ्यइतितेभ्यः सूक्ष्मभूतेभ्योमहत् व्यापकंसूत्रमभवत् 

यत्सूत्रं लिंगमिति परिचक्षतेलिंगशब्देनोच्यतइत्यर्थः तेभ्योभूतेभ्यो वक्ष्यमाणक्रमेण लिंगदेह उत्पन्नइत्यर्थः । ३० । तत्रसूत्रशब्देनवायुर्गृह्यते वायुर्वैसूत्रंवायुनावैसूत्रेण सर्वाणिभूतानिसंबद्धानीति श्रुतेः तत्सूत्रंसर्वात्मकं सर्वप्राणात्मकं भवतितत्सूत्रं परमात्मनः सूक्ष्मदेहइत्यर्थः यत्पूर्वमव्यक्तमित्यु क्तं तत्परमात्मनः कारणदेहइत्याह अव्यक्तंकारणोदेहइति ३१ यस्मिन्जगद्बीजंकारणरूपंस्थितं यस्मा च्चलिंगदेहोद्भवस्तदव्यक्तमितिपूर्वेणान्वयः इत्थंपरमात्मनः सकाशादपंचीकृतभूतोत्पत्तिमुक्त्वामध्येए

न्महत्सूत्रंयल्लिंगंपरिचक्षते ३० सर्वात्मकंतत्संप्रोक्तंसूक्ष्मदेहोयमात्मनः । अव्यक्तंकार
णोदेहःसचोक्तंपूर्वमेवहि ३१ यस्मिन्जगद्बीजरूपंस्थितंलिंगोद्भवोयतः । ततःस्थूला
निभूतानिपंचीकरणमार्गतः ३२ पंचसंख्यानिजायंतेतत्प्रकारस्तथोच्यते। पूर्वोक्तानि
चभूतानिप्रत्येकंविभजेद्द्विधा ३३ एकैकंभागमेकस्यचतुर्धाविभजेद्गिरे। स्वस्वेतरद्वि
तीयांशेयोजनात्पंचपंचते ३४ तत्कार्यंचविराड्देहः स्थूलदेहोयमात्मनः। पंचभूतस्थ

वकारण देहस्वरूपंसूक्ष्मं सूक्ष्मभूतोत्पत्तिप्रसंगेनोक्त्वाथपंचीकृतभूतोत्पत्तिमाह ततःस्थूलानीति ततो पंचीकृतभूतोत्पत्त्यनंतरमित्यर्थः ३२ पंचीकरणप्रकारमेवाह पूर्वोक्तानीतियान्यपंचीकृतभूतानि पूर्वं मुक्तानितन्मध्ये एकैकंभूतंद्विधा विभजेत्तत्राप्येकभूतस्ययोर्धोभागस्तंचतुर्धाविभजेत् विभज्यस्वस्मात् स्वस्मादितरद्यद्भूतं तस्ययोद्वितीयोंशोर्धभागात्मकस्तस्मिन् योजनातेसर्वे पंचपदार्थाः पंचावयवाभवं तीत्यर्थः ॥३३। ३४ ॥ एवंपंचीकृतभूतानांयत्कार्यं तत्कार्यंविराड्देहोभवतीत्यर्थः सविराड्देहःपरमेश्वरस्य

स्थूलदेहोभवतीत्याह स्थूलदेहोयमात्मनइति आत्मनोममेत्यर्थः अथेंद्रियान्तःकरण प्राणानांपूर्वोक्त लिंगदेहान्तर्गतानामुत्पत्तिमाह पंचभूतस्येति पंचभूतानांयेसत्वांशास्तैः प्रत्येकंज्ञानेन्द्रियाणिपंचभवंति ३५। मिलितैस्तुतैःसत्वांशैरंतःकरणं भवतीत्याह मिलितैः तैरिति ३६ वृत्तिभेदस्वरूपमाहयदात्विति। संकल्पविकल्पकृत्यंपदांतःकरणं करोतितदातदंतःकरणं मनइत्याभिख्यंमनः संज्ञकंभवतीत्यर्थः यदासंशयहीनं यथास्यात्तथासुनिश्चितंवस्तुतदंतःकरणं प्रवेत्तितदातद्बुद्धिसंज्ञकंभवतीत्यर्थः। ३७। यदानुसं

सत्वांशैःश्रोत्रादीनांसमुद्भवः ३५ ज्ञानेन्द्रियाणांराजेन्द्रप्रत्येकंमिलितैस्तुतैः। अन्तः
करणमेकंस्याद्वृत्तिभेदाच्चतुर्विधं ३६ यदातुसंकल्पविकल्पकृत्यंतदाभवेत्तन्मनइत्य
भिख्यं। स्याद्बुद्धिसंज्ञंचयदाप्रवेत्तिसुनिश्चितंसंशयहीनरूपं ३७ अनुसंधानरूपंतच्चि
त्तंचपरिकीर्त्तितं। अहंकृत्यात्मवृत्त्यातुतदहंकारतांगतं ३८ तेषांरजोंशैर्जातानिक्रमा
त्कर्मेंद्रियाणिच। प्रत्येकंमिलितैस्तैस्तुप्राणोभवतिपंचधा ३९ हृदिप्राणोगुदेपानोनाभि
स्थस्तुसमानकः। कण्ठदेशेप्युदानःस्याद्व्यानःसर्वशरीरगः ४० ज्ञानेन्द्रियाणिपञ्चैव

धानवृत्तिर्भवतितदांतःकरणस्य चित्तमितिसंज्ञेत्यर्थः अहंकृत्यात्मवृत्त्येतिआत्मशब्दःस्वरूपपरः अहंकृति स्वरूपवृत्त्यातुतदंतःकरणमहंकारतांगतमहंकारसंज्ञांलभतइत्यर्थः ३८ अथकर्मेंद्रियाणामुत्पत्तिमाहतेषामितितेषांपंचभूतानांप्रत्येकंरजोंशैःकर्मेंद्रियाणिपंचोत्पद्यंते तैर्मिलितैस्तुरजोंशैः प्राणापानादि पंचवृत्त्यात्मकः प्राणोभवतीत्यर्थः ३९ तेषांवायूनां वृत्तिभेदात् तेषांस्थानानिनामानि चाहहृदिप्राणइति ४०

अधुना पूर्वोक्तलिंगदेहस्य यावत्स्वरूपमुच्यते ज्ञानेंद्रियाणीतिधियाचसहितं मनइति मनोबुद्धिश्चेत्य र्थः ४१ एतत्सप्तदशावयवकं सूक्ष्मशरीरं ममभवति यत्लिंगसंज्ञकंभवति तदित्याह एतत्सूक्ष्ममिति इत्थंदेहत्रयस्वरूपमुक्त्वा जीवेश्वरविभागकारणमाह तत्रयाप्रकृतिरितितत्रैका शुद्धसत्त्वाभिधानासामा या द्वितीयामलिनसत्वप्रधाना साविद्येति मायाविद्ययोर्भेदः ४२ तत्रयास्वाश्रयंरक्षेन्नावृणुयात्सामा येति निगद्यते ४३ तस्यामिति तस्यां स्वाश्रयाव्यामोहकारिण्यां शुद्धसत्वप्रधानायां मायायामीशितुः

पञ्चकर्मेन्द्रियाणिच । प्राणादिपञ्चकंचैवधियाचसहितंमनः ४१ एतत्सूक्ष्मशरीरं
स्यान्ममलिंगंयदुच्यते । तत्रयाप्रकृतिःप्रोक्तासाराजन्द्विविधास्मृता ४२ सत्त्वात्मिका
तुमायास्यादविद्यागुणमिश्रिता । स्वाश्रयंयातुसंरक्षेत्सामायेतिनिगद्यते ४३ तस्यांय
त्प्रतिबिम्बंस्याद्बिम्बभूतस्यचेशितुः । सईश्वरःसमाख्यातः स्वाश्रयज्ञानवान्परः ४४
सर्वज्ञःसर्वकर्त्ताचसर्वानुग्रहकारकः । अविद्यायांतुयत्किंचित्प्रतिबिम्बंनगाधिप ४५
तदेवजीवसंज्ञंस्यात्सर्वदुःखाश्रयंपुनः । द्वयोरपीहसंप्रोक्तंदेहत्रयमविद्यया ४६ देहत्रया

परमात्मनोयत्प्रतिबिंबंपतति तत्प्रतिबिंबमीश्वरः समाख्यातः सचेश्वरः स्वाश्रयंव्यापकं ब्रह्मतज्ज्ञान वान् भवति मायायाः तदाधारब्रह्मणोनावरणात् ४४ किंचतस्यव्यापकत्वात् कुत्रापितज्ज्ञानस्यावरणा भावात्सर्वज्ञोभवति अचिंत्यमायाशक्तिमत्वात् सर्वकर्त्ताचसर्वानुग्रहकर्त्ताचभवतीत्यर्थः अविद्यायामिति मलिनसत्वप्रधानायामविद्यायांयत्प्रतिबिंबंतज्जीवसंज्ञंभवतीत्युत्तरेणान्वयः ४५ तज्जीवसंज्ञं मलिन

सत्वप्रधानाविद्ययातदाश्रयस्यस्वरूपभूतानन्दस्यावरणात्सर्वदुःखाश्रयमसर्वज्ञमव्यापकं च भवतीत्य
र्थः द्वयोरपीति द्वयोरपीश्वरजीवयोर्देहत्रयं पूर्वोक्तं भवति ईश्वरस्यावरणाभावेपि विक्षेपस्यसत्वात्
अत्राविद्ययेत्यनेन मायाविद्ययोरुभयोरपिग्रहणं ४६ देहत्रयाभिमानेतिउभयोरपि देहत्रयाभिमाना
न्नामत्रयंभवतीत्यर्थः तत्रजीवस्यनामत्रयंवदति प्राज्ञस्त्विति कारणदेहाभिमानीयः सप्राज्ञः सूक्ष्मदे
हाभिमानीतुतैजसः ४७ स्थूलदेहीति स्थूलदेहाभिमानीतुविश्वसंज्ञकइत्यर्थः एवमीश्वरोपि देहत्र

भिमानाद्वाप्यभून्नामत्रयंपुनः। प्राज्ञस्तुकारणात्मास्यात्सूक्ष्मदेहीतुतैजसः ४७ स्थूल
देहीतुविश्वाख्यस्त्रिविधःपरिकीर्तितः। एवमीशोपिसंप्रोक्तईशसूत्रविराट्पदैः ४८ प्रथ
मोव्यष्टिरूपस्तुसमष्ट्यात्मापरैःस्मृतः। सहिसर्वेश्वरःसाक्षाज्जीवानुग्रहकाम्यया ४९
करोतिविविधंविश्वंनानाभोगाश्रयंपुनः। मच्छक्तिप्रेरितोनित्यंमयिराजन्प्रकल्पितः ५०

इतिश्रीदेवीभागवतेमहापुराणे अष्टादशसाहस्र्यांसंहितायां
सप्तमस्कंधे देवीगीतायांद्वितीयोध्यायः २ ॥

याभिमानादीशसूत्रविराट्पदैः संप्रोक्तः कथितइत्यर्थः ४८ प्रथमइति प्रथमोजीवोव्यष्टिरूपोव्यष्टिदेहत्र
याभिमानीत्यर्थः परईश्वरस्तुसमष्टिः समष्टिदेहाभिमानीत्यर्थः ईश्वरस्यमहिमानं वर्णयति सहि
सर्वेश्वरइति तस्यस्वानुभवानंदेननिरंतरं नित्यतृप्तत्वेपिकेवलं जीवानुग्रहकाम्यया जीवानांमोक्षो
भवत्वितीच्छया नानाविधंविश्वं नानाभोगाश्रयं रचयतीति करुणासमुद्रईश्वरइत्यर्थः ४९ सो

पीतिहेराजन् सोपीश्वरोमम ब्रह्मरूपिण्याया मायाशक्तिस्तया प्रेरितएवसर्वंकरोति यतःसईश्वरो मयिब्रह्मरूपिण्यांरज्जुसर्पवदेवकल्पितस्ततोमच्छक्त्याधीनएवेत्यर्थः ॥ ५० ॥

इतिश्रीदेवीभागवततिलकेगौडपाठानुसारिव्याख्यानेसप्तमस्कंधेदेवीगीतायांद्वितीयोध्यायः ॥ २ ॥

षट्पञ्चाशन्महापद्यैरपवादपुरःसरम् । महाघोरंविश्वरूपंदर्शितंचेतिकथ्यते ॥ इत्थमध्यारोपमुक्त्वापवादमाह ॥ मन्मायेति हे पर्वत यथामन्मायाशक्त्याचराचरं जगत्सर्वंक्लृप्तंसापिमायामत्तः मत्स्वरूपात्पृथङ्नास्तितस्यामपिकल्पितत्वेनमिथ्यात्वान् मिथ्यापदार्थस्य चाधिष्ठानसत्तातिरिक्तसत्ताभावात् तस्मादहमेवा

श्रीदेव्युवाच मन्मायाशक्तिसंक्लृप्तं जगत्सर्वंचराचरम् । सापिमत्तःपृथक्मायानास्त्येव परमार्थतः १ व्यवहारदृशासेयं विद्यामायेतिविश्रुता । तत्त्वदृष्ट्यातुनास्त्येवतत्त्वमेवास्तिकेवलम् २ साहंसर्वंजगत्सृष्ट्वातदंतःप्रविशाम्यहम् । मायाकर्मादिसहितागिरेप्रा

स्मिपरमार्थतो नान्यत्किंचिद्वस्त्वंतरमस्तीत्यर्थः १ ननुसर्वथाद्वैताभावेजगत्कथंभासतेइतिचेत्तत्राहव्यवहारेतिअनाद्यविद्याभ्रांतानां योव्यवहारस्तद्दृशातद्दृष्ट्यामायाविद्येति.विश्रुताभवतितत्त्वदृष्ट्यातुब्रह्मदृष्ट्यातुसानैवास्तिकिंतुतत्त्वमेवकेवलमस्तीत्यर्थः नहिभ्रांतदृष्ट्यारज्जुसर्पतत्कारणाज्ञानसत्त्वेपि रज्जुदृष्ट्याकिंचिदपितद्वर्ततइतिभावःतथाचश्रुतिः। ननिरोधोनचोत्पत्तिर्नवद्धोनचसाधकः । नमुमुक्षुर्नवैमुक्तः इत्येषापरमार्थतेति । तापनीयेच असत्वमरजस्कमतमस्कमनाद्यमितिब्रह्मवर्णितं २ ननुयदिप्रपंचोमिथ्या तर्हितदंतः पातिजीवोपिमिथ्येतिवक्तव्यं तथाचजीवस्यमिथ्यात्वेमोक्षदशायां तस्यावस्थानाभावेनस्व

नाशार्थंकदापिजीवोयत्ननकुर्यादितिमोक्षशास्त्रं व्यर्थमेवेतिचेत्तत्राहसाहमितिहेगिरेमायाचाविद्याकर्माणि चतत्प्राणिनां अनादिनानासंस्काराश्चतैःसहिताहमेवकूटस्थब्रह्मरूपा सर्वंजगत्प्रथमतः सृष्ट्वातदंतस्तन्मध्येघटे आकाशवदादर्शे प्रतिबिम्बवत् यद्वाचिदाभासरूपेण प्रविशामितत्रापिप्राणपुरःसराप्राणमग्रतः कृत्वाप्रविशामि ३ तत्किमर्थमितिचेत्तत्राह लोकांतरगतिरितियद्यहंप्राणंपुरःसरंकृत्वा प्राणाभिमानं कृत्वानप्रवेक्ष्यामितर्हिममव्यापकत्वात् लोकांतरगमनादिके जननमरणादिव्यवहारश्चकथंस्यान्नहि व्यापकस्यगमनागमनं देहसंबंधोदेहत्यागश्च संभवतिइति हेतुनातत्सिद्ध्यर्थंप्राणपुरःसरंप्रविशामि तस्मिंश्चप्राणेस्वीकृतेसतितस्य देहांतरप्रवेशेजन्मतत्त्यागे मरणंतथैवलोकांतरगतिश्चेति सर्वंसिद्ध्यतिअयंभा

णपुरःसरा ३ लोकांतरगातिर्नोचेत्कथंस्यादितिहेतुना। यथायथाभवंत्येवमायाभेदास्तथातथा ४ उपाधिभेदाद्भिन्नाहं घटाकाशादयोयथा। उच्चनीचादिवस्तूनिभासयन्भास्क

वः नकेवलंजीवत्वं चिदाभासस्यैवयेनपूर्वोक्तं दूपणंभवेत्किंतर्हिअहंकूटस्थरूपिणी तथांतःकरणंतदाश्रयभूताविद्याचिदाभासश्चेतिचतुष्टयं मिलित्वाजीवत्वंतथाचज्ञानेनाविद्यांतःकरणचिदाभासानांनाशेपि कूटस्थब्रह्मांशस्यमुक्तावशेषान्नजीवस्यमोक्षार्थं ममवृत्तिर्नवामोक्षशास्त्रानर्थक्यमिति ननुतर्हितवैकत्वाज्जीवस्याप्येकत्वं स्यादितिचेत्तत्राह यथायथेति यथाव्यापकएकएवाकाशोघटाद्युपाधिभेदेन यथा भिद्यते तथाविद्यानेकत्वस्वीकारेण विद्यानामंतःकरणानांच भेदात्कूटस्थोपिभिद्यतइति जीवबहुत्वेनाप्युपपन्नमेवेत्यर्थः तथाचश्रुतिः इंद्रोमायाभिःपुरुरूपईयतेयुक्ताह्यस्यहरयः शतादशेत्ययं वैहरयइति ४

ननुतर्हितवजगदंतः याति त्वेनतवदोषेणदुष्टत्वमपि स्यात्तत्राहउच्चनीचादिवस्तूनीतियथासूर्यः सर्वाण्यु च्चनीचादिवस्तूनि भासयन्नपि नदुष्यति तथैवाहंकदापिदोषैर्दुष्टानास्मीत्यर्थः ५ ननुसूर्यः साक्षिभूतो नदुष्यतीतियुक्तं त्वंतुसकलकार्यकर्त्रीति कर्त्तुर्दोषलेपो भविष्यत्येवेतिचेत्तत्राहमयिबुद्ध्यादीति विमूढा बुद्ध्यादिनिष्ठंकर्तृत्वमविवेकेनमय्यात्मन्यध्यस्यैवात्माकर्त्तेतिवदंतिनसुबुद्धयो विवेकिनस्तथाचसूर्यवद

रःसदा ५ नदुष्यतितथैवाहंदोषैर्लिप्ताकदापिन । मयिबुद्ध्यादिकर्तृत्वमध्यस्यैवापरेज
नाः ६ वदन्तिचात्माकर्त्तेतिविमूढानसुबुद्धयः । अज्ञानभेदतस्तद्वन्मायायाभेदतस्त
था ७ जीवेश्वरविभागश्चकल्पितोमाययैवतु । घटाकाशमहाकाशविभागःकल्पितो
यथा ८ तथैवकल्पितोभेदोजीवात्मपरमात्मनोः । यथाजीवबहुत्वंचमाययैवनचस्व
तः ९ तथेश्वरबहुत्वंच मायायानस्वभावतः । देहेन्द्रियादिसंघातवासनाभेदभेदि
ता १० अविद्याजीवभेदस्यहेतुर्नान्यःप्रकीर्त्तितः । गुणानांवासनाभेदभेदितायाधरा

हमपि साक्षिण्येव न कर्त्रीतिभावः ६ अज्ञानभेदतइति जीवबहुत्ववदीश्वरमूर्तिबहुत्वमपि मायाभेदान्मायाकल्पितब्रह्मविष्ण्वाद्याकारभेदाद्भवतीति जीवेश्वरसिद्धिमुपसंहरति जीवेश्वरविभागश्चेतिअज्ञानभेदाज्जीवसिद्धिर्मायाभेदादीश्वरसिद्धिरित्यर्थः ७ तत्रदृष्टान्तमाहघटाकाशेति ८ ईश्वरबहुत्वंब्रह्मविष्ण्वादिरूपेश्वरबहुत्वमित्यर्थः ९ जीवभेदहेतुंविशदयति देहेंद्रियादीति १० हेधराधरपर्वतगुणा

नां ये वासनाभेदाः सात्विकाराजसास्तामसाश्चैतैर्भेदिता या माया सा परभेदस्यब्रह्मविष्णवादीश्वरभे दस्य हेतुर्नान्यइत्यर्थः इदंसूतसंहितान्तर्गतसूतगीतायां स्पष्टंव्याख्यातंच तत्र माधवाचार्यैः ११ यतएकमेव चैतन्यं सर्वात्मकं ततोहं सर्वात्मिकास्मीत्याहमयीति ओतंप्रोतं ग्रथितमित्यर्थः १२

धर ११ मायासापरभेदस्यहेतुर्नान्यःकदाचन । मयिसर्वमिदंप्रोतमोतंचधरणीधर १२ ईश्वरोहंचसूत्रात्माविराडात्माहमस्मिच।ब्रह्माहंविष्णुरुद्रौचगौरीब्राह्मीचवैष्णवी १३ सूर्योहंतारकश्चाहंतारकेशस्तथास्म्यहम् । पशुपक्षिस्वरूपाहंचाण्डालोहंचतस्क रः १४व्याधोहंक्रूरकर्माहंसत्कर्माहंमहाजनः।स्त्रीपुंनपुंसकाकारोप्यहमेवनसंशयः १५ यच्चकिंचित्क्वचिद्वस्तु दृश्यतेश्रूयतेपिवा । अन्तर्बहिश्चतत्सर्वंव्याप्याहंसर्वदास्थि ता १६ नतदस्तिमयात्यक्तंवस्तुकिंचिच्चराचरम् । यद्यस्तिचेत्तच्छून्यंस्याद्वन्ध्यापुत्रो पमंहितत् १७ रज्जुर्यथासर्पमालाभेदैरेकाविभातिहि । तथैवेशादिरूपेणभाम्यहंना त्रसंशयः १८ अधिष्ठानातिरेकेणकल्पितंतन्नभासते । तस्मान्मत्सत्तयैवैतत्सत्ता

ईश्वरः कारण देहाभिमानी सूत्रात्मा हिरण्यगर्भः विराट् स्थूलदेहाभिमानी १३ । १४ १५ । १६ शून्यं स्यादिति मया सद्रूपया त्यक्तं शून्यमसदेव स्यादित्यर्थः १७ । १८ अधिष्ठानाति रेकेणेति अधिष्ठानसत्तातिरेकेणेत्यर्थः एतएतत्कल्पितं जगत्तस्मान्मत्सत्तयैव सत्तावद्भवेन्नान्यथेत्य

र्थः १९ समष्ट्यात्मेतिसर्वाभिमानिविराट्स्वरूपं यथावदसीत्यर्थः २० पूजयंतश्चेति सर्वेपांभगवती विराट्स्वरूपदर्शनोत्सुकत्वात्स्वाभीष्टसंपादने प्रवृत्तस्यहिमालयस्यतद्वचः साधुसाध्विति पूजयंतइत्यर्थः २१ । २२ द्यौर्मस्तकमिति अत्र द्यौःशब्देन सर्वोर्ध्वः सत्यलोकोगृह्यते २३ वायुरेवैतस्यप्राणाः

वन्नान्यथाभवेत् १९ हिमालयउवाच ॥ यथावदसिदेवेशिसमष्ट्यात्मवपुस्त्विदम् । त
थैवद्रष्टुमिच्छामियदिदेविकृपामयि २० व्यासउवाच ॥ इतितस्यवचःश्रुत्वासर्वेदेवाः
सविष्णवः । ननन्दुर्मुदितात्मानःपूजयंतश्चतद्वचः २१ अथदेवमतंज्ञात्वाभक्तकामदु
घाशिवा । अदर्शयन्निजंरूपंभक्तकामप्रपूरिणी २२ अपश्यंस्तेमहादेव्याविराड्रूपंप
रात्परम् । द्यौर्मस्तकंभवेद्यस्यचन्द्रसूर्य्यौचचक्षुषी २३ दिशःश्रोत्रेवचोवेदाःप्राणावायुः
प्रकीर्त्तितः । विश्वंहृदयमित्याहुःपृथ्वीतुजघनंस्मृतम् २४ नभस्तलंनाभिसरोज्योति
श्चक्रमुरःस्थलम् । महर्लोकस्तुग्रीवास्याज्जनोलोकोमुखंस्मृतम् २५ तपोलोकोरराटि
स्तुसत्यलोकादधःस्थितः । इन्द्रादयोवाहवस्तुशब्दःश्रोत्रंमहेशितुः २६ नासत्यदस्रौ

विश्वंसर्वात्मकमव्यक्तमित्यर्थस्तदस्यरूपस्यहृदयं २४ नभस्तलंभुवर्लोकः २५ सत्यलोकादधः स्थितस्तपोलोकोरराटिर्ललाटमित्यर्थः शब्दंश्रोत्रमितियोस्माकं श्रोत्रविषयः शब्दः सतस्यस्वरूपस्य श्रोत्रंश्रोत्रेंद्रियं भवतीत्यर्थः पूर्वत्रदिशाश्रोत्रेइत्यत्रतुश्रोत्रशब्देन श्रोत्रेन्द्रियाधारोगृह्यतइतिनपुनरुक्तिः २६

नासत्यदस्रौ अश्विनीकुमारौतावस्यरूपस्यनासे नासापुटेस्तः गंधस्तुघ्राणंप्राणेन्द्रियमित्यर्थः २७ ब्रह्म स्थानं प्रजापतिचतुर्मुखस्थानं तदस्यभ्रूविजृंभोभ्रूविकाशः आपोजलानितुतालुः रसनेन्द्रियाधारोभव ति तद्गतोरसस्तुजिह्वाभवति रसनेन्द्रियंभवतीत्यर्थः २८ स्नेहकलाः स्त्रीपुत्रादिस्नेहलेशाः सर्गः सृष्टि

नासेस्तोगन्धोघ्राणंस्मृतोबुधैः । मुखमग्निःसमाख्यातोदिवारात्रीचपक्ष्मणी २७ ब्र ह्मस्थानंभ्रूविजृंभोप्यापस्तालुःप्रकीर्त्तितः । रसोजिह्वासमाख्याता यमोदंष्ट्राःप्रकीर्त्ति ताः २८ दन्ताःस्नेहकलाप्यस्याहासोमायाप्रकीर्त्तिता । सर्गस्त्वपाङ्गमोक्षःस्याद्व्रीडोर्ध्वो ष्ठोमहेशितुः २९ लोभःस्यादधरोष्ठःस्याधर्ममार्गस्तुपृष्ठभूः । प्रजापतिश्चमेढ्रंस्या द्यःस्रष्टाजगतीतले ३० कुक्षिःसमुद्रागिरयोऽस्थीनिदेव्यामहेशितुः । नद्योनाड्यःस माख्यातावृक्षाःकेशाःप्रकीर्त्तिताः ३१ कौमारयौवनजरा वयोस्यगतिरुत्तमा । बला हकास्तुकेशाःस्युःसंध्येतेवाससीविभोः ३२ राजन्श्रीजगदंबायाश्चन्द्रमास्तुमनःस्मृ तः । विज्ञानशक्तिस्तुहरीरुद्रोन्तःकरणंस्मृतम् ३३ अश्वादिजातयःसर्वाः श्रोणीदे

रेवापांगमोक्षः कटाक्षइत्यर्थः २९ अधर्ममार्गस्तुपृष्ठभागइत्यर्थः ३० महेशितुर्महेश्वर्यादेव्यागिरयः पर्वताअस्थीनीत्यर्थः ३१ कौमारेति त्रिविधंवयोगतिरित्यर्थः ३२ चन्द्रमास्त्विति तुशब्दोमन इत्य त्रयोज्योहेराजन् जनमेजय श्रीजगदंबायाश्चंद्रोमनोपिस्मृतइत्यर्थः तेनपूर्वोक्तनेत्रमध्ये गणितस्यचंद्रम

सोमनस्त्वमपिबोधितमिति बोध्यं विज्ञानशक्तिर्बुद्धिः साहरिः ३३ अतलादीति अतलादिशताक्रांता लोका यथायोग्यं कट्यधोभागतांगताः कटिमारभ्यपादमूलपर्य्यन्तं व्यवस्थिताइत्यर्थः ३४ तथाचश्रुतिः अग्निर्मूर्धाचक्षुषीचंद्रसूर्यौ दिशःश्रोत्रेवाग्विवृताश्चवेदाः वायुः प्राणोहृदयंविश्वमस्यपद्भ्यां पृथिवीह्येष सर्वभूतांतरात्मेति जिह्वयासर्वंजगल्लेलिहानं खादयन्तं ३५ दंष्ट्रासुकटकटारावः कटकटेतिशब्दो

शेस्थिताविभोः । अतलादिमहालोकाः कट्यधोभागतांगताः ३४ एतादृशमहारूपं
ददृशुःसुरपुंगवाः । ज्वालामालासहस्राढ्यंलेलिहानंचजिह्वया ३५ दंष्ट्राकटकटारावं
वमंतंवह्निमक्षिभिः । नानायुधधरंवीरंब्रह्मक्षत्रौदनंचयत् ३६ सहस्रशीर्षनयनंसहस्र
चरणंतथा । कोटिसूर्य्यप्रतीकाशंविद्युत्कोटिसमप्रभम् ३७भयंकरंमहाघोरंहृदक्ष्णोस्त्रा
सकारकम् । ददृशुस्तेसुराःसर्वेहाहाकारंचचक्रिरे ३८ विकम्पमानहृदया मूर्च्छामापु
र्दुरत्ययाम् । स्मरणंचगतंतेषांजगदम्बेयमित्यपि ३९ अथयेवास्थितावेदाश्चतुर्दि
क्षुमहाविभोः । बोधयामासुरत्युग्रं मूर्च्छातोमूर्च्छितान्सुरान् ४० अथतेधैर्यमालं
ब्यलब्ध्वाचस्मृतिमुत्तमाम् । प्रेमाश्रुपूर्णनयनारुद्धकंठास्तुनिर्जराः ४१ वाष्पगद्गद

यस्यब्रह्मक्षत्रे ओदनोयस्ययस्यब्रह्मक्षत्रंचोभेभवत ओदनोमृत्युर्यस्योपसेचनमितिश्रुतेः ३६ । ३७ हाहाकारंभयेनभीतत्वाच्चक्रिरेइत्यर्थः ३८ स्मरणंचगतमिति इयंजगदंबास्माकं पालयित्रीतिस्मरणमपि तेषांगतं नष्टमित्यर्थः ३९ अथ यइतिविभोर्देव्याश्चतुर्दिक्षु ये मूर्त्तिमंतोवेदाः स्थितास्तेमू

र्च्छितान् देवान्मूर्च्छातो बोधयामासुर्व्युत्थापयामासुरित्यर्थः ४० । ४१ । ४२ सभयाजाताःस्मइत्यर्थः ४३ स्वस्याप्यज्ञेयइति यावान्यत्परिमाणवान्यश्चयादृशस्तत्रस्वपराक्रमः सतवस्वस्याप्यज्ञेय इति तादृशोसौतवपराक्रमोस्माकं तदर्वाक्जायमानानां कथंसविषयोभवेन्नकथमपीत्यर्थः तथाचश्रुतिः अर्वाग्देवाअस्यविसर्जने नाथाकोवेदयति आबभूवेतियोस्याध्यक्षः परमेव्योमन्सोअंगवेदयति वा न वेदे

यावाचास्तोतुंसमुपचक्रिरे। देवाऊचुः॥ अपराधंक्षमस्वांबपाहिदीनांस्त्वदुद्भवान्४२
कोपंसंहरदेवेशिसभयारूपदर्शनात् । कातेस्तुतिःप्रकर्त्तव्यापामरैर्निर्जरैरिह ४३
स्वस्याप्यज्ञेयएवासौ यावान्यश्चस्वविक्रमः । तदर्वाक्जायमानानांकथंसविषयोभवेत् ४४ नमस्तेभुवनेशानि नमस्तेप्रणवात्मके। सर्ववेदान्तसंसिद्धे नमोह्रींकारमूर्त्तये ४५ यस्मादग्निःसमुत्पन्नो यस्मात्सूर्यश्चचन्द्रमाः । यस्मादोषधयःसर्वास्तस्मै सर्वात्मनेनमः ४६ यस्माच्चदेवाःसम्भूताः साध्याःपक्षिणएवच । पशवश्चमनुष्याश्च तस्मैसर्वात्मनेनमः ४७ प्राणापानौव्रीहियवौतपःश्रद्धाऋतंतथा। ब्रह्मचर्यंविधिश्चैव यस्मात्तस्मैनमोनमः ४८ सप्तप्राणार्चिषोयस्मात्समिधःसप्तएवच । होमाः

ति । ४४ । ४५ । ४६ । ४७ । यस्मात्संभूतो विधिरिति कर्तव्यतारूपस्तस्मैनमइत्यन्वयः ४८ सप्तप्राणार्चिषइति प्राणाश्चार्चिषश्चेतिद्वंद्वः सप्तशीर्षण्याः प्राणास्तस्मादेवभवंतीत्यर्थः तेषांचसप्तार्चिषांदीप्तयः स्वस्वविषयावद्योतनानि तथासप्तसमिधःसप्तविषयाविषयैर्हिप्राणाः समिध्यंतेसप्तहोमास्तद्विषयविज्ञा

नानियदस्यविज्ञानंततज्जुहोतीति श्रुत्यंतरात् तथा सप्तलोकाइन्द्रियस्थानानि येतेयस्माज्जातास्त
स्मैसर्वात्मनेनमः ४९ । ५० । ५१ । तथाचश्रुतिर्मुंडके यस्मादग्निःसमिद्धोयस्यसूर्यः सोमात्पर्जन्यओ

सप्ततथालोकास्तस्मैसर्वात्मनेनमः ४९ यस्मात्समुद्रागिरयः सिन्धवःप्रचरन्तिच । यस्मादोषधयःसर्वा रसास्तस्मैनमोनमः ५० यस्माद्यज्ञःसमुद्भूतो दीक्षायूपश्चद क्षिणाः । ऋचोयजूंषिसामानि तस्मैसर्वात्मनेनमः ५१ नमःपुरस्तात्पृष्ठेच नमस्ते पार्श्वयोर्द्वयोः । अधऊर्ध्वंचतुर्दिक्षु मातर्भूयोनमोनमः ५२ उपसंहरदेवेशि रूपमे तदलौकिकम् । तदेवदर्शयास्माकंरूपंसुन्दरसुन्दरम् ५३ व्यासउवाच ॥ इतिभीतान् सुरान्दृष्ट्वा जगदम्बाकृपार्णवा । संहृत्यरूपंघोरंतद्दर्शयामाससुन्दरम् ५४ पाशांकुश वराभीतिधरंसर्वांगकोमलम् । करुणापूर्वनयनं मन्दस्मितमुखांबुजम् ५५ दृष्ट्वात त्सुन्दररूपं तदाभीतिविवर्जिताः । शांतचित्ताःप्रणेमुस्ते हर्षगद्गदनिस्वनाः ५६ ॥

इतिश्रीदेवीभागवतेमहापुराणेदेवीगीतायांसप्तमस्कंधेत्रयस्त्रिंशोऽध्यायः ३३ ॥

षधयःप्रजानामित्यादितस्माद्दचः सामयजूंषिदीक्षायज्ञाश्च सर्वेक्रतवोदक्षिणाश्चसंवत्सरो यजजाजश्च
लोकाः सोमोयत्रपवतेयत्रसूर्यइति ५२ । ५३ । ५४ । ५५ । ५६ ॥

इतिश्रीदेवीभागवततिलकेगौडपाठानुसारिव्याख्यानेदेवीगीतायांतृतीयोध्यायः ३ ॥

पंचाशत्पद्यवैस्तुवैराग्यकथनोत्तरम् । ज्ञानमेवतुसंपाद्यंमोक्षार्थमितिकथ्यते ॥ दर्शितं विश्वमनायासेनत्व
ध्यमस्माभिरितिसहजमस्तीति । नमंतव्यमिति देवान्प्रतिभगवतीप्राहकयूयमिति १ । २ प्रकृतमिति
ब्रह्मविद्योपदेशप्रकरणंहिप्रचलितं पूर्वमध्येदेवैर्विश्वरूपदर्शनार्थं प्रार्थितासती विश्वरूपंदर्शयामास
उपसंहृतेतु विश्वरूपे पुनः प्रकृतंयद्धुपदेशप्रकरणं तच्छृणुएवेति हिमालयं प्रतिभगवतीवदतीति बोध्यं

श्रीदेव्युवाच ॥ क्वयूयंमन्दभाग्यावै क्वेदंरूपंमहाद्भुतम् । तथापिभक्तवात्सल्यादी
दृशंदर्शितंमया १ नवेदाध्ययनैर्योगैर्नदानैस्तपसेज्यया । रूपंद्रष्टुमिदंशक्यं केवलं
मत्कृपांविना २ प्रकृतंशृणुराजेन्द्र परमात्मात्रजीवताम् । उपाधियोगात्संप्राप्तः कर्तृ
त्वादिकमप्युत ३ क्रियाःकरोतिविविधा धर्माधर्मैकहेतवः । नानायोनीस्ततः प्राप्य
सुखदुःखैश्चपूज्यते ४ पुनस्तत्संस्कृतिवशान्नानाकर्मरतःसदा । नानादेहान्समाप्नो
तिसुखदुःखैश्चयुज्यते ५ घटीयंत्रवदेतस्य नविरामःकदापिहि । अज्ञानमेवमूलंस्या

परमात्मात्रजीवतामिति अमूढोमूढइवव्यवहारवान्नास्तेमाययैवेतिश्रुतेरित्यर्थः ३ वैराग्यार्थमाह क्रियाः
करोति ४ तत्संस्कृतिः सुखदुःखसंस्कारः ५ एतस्येतिएतस्यजन्ममरणप्रबंधरूपसंसारस्यविरामःसमाप्तिः
कदापिनास्ति ब्रह्मपर्यन्तमनंतसृष्टिप्रलयेषु जातेष्वपि जीवसंसारस्य विद्यमानत्वात् इत्थंसंसारस्या
नादिकालंप्रवृत्तत्वमुपपादितुं नाशोपायप्रदर्शनार्थं तन्निदानमाह अज्ञानमेवेति ततःकामोविद्यातइच्छे

त्यर्थः इच्छातःक्रियाभवतीत्यर्थः ६ यस्मादज्ञानमेवमूलं तस्मादित्याह एतद्विजन्मेति तथाचश्रुतिः योह्य विदित्वात्मानमस्माल्लोकात्प्रैतिसकृपण इति ७ अज्ञाननाशनसाधनमाह विद्येवेति ८ तज्जन्मज्ञानजं कर्म नपटीयइत्यर्थः तत्रहेतुमाह विरोधाभावइति नह्यंधकारोंधकारंनाशयति तद्वदज्ञानजन्यकर्म्मणोहि अज्ञानरूपत्वान्नतेनाज्ञानेनकर्मणाविरोध इत्यर्थः कर्म्मणाज्ञाननाशेआशानैवभाव्यतां नैवकर्त्तव्येत्यर्थः ९

त्ततःकामःक्रियास्ततः ६ तस्मादज्ञाननाशाय यतेतनियतंनरः। एतद्धिजन्मसाफल्यं यदज्ञानस्यनाशनम् ७ पुरुषार्थसमाप्तिश्च जीवन्मुक्तदशापिच। अज्ञाननाशनेश क्ताविद्यैवतुपटीयसी ८ नकर्मतज्जंनोपास्तिर्विरोधाभावतोगिरे। प्रत्युताशाज्ञानना शे कर्मणानैवभाव्यताम् ९ अनर्थदानिकर्माणि पुनःपुनरुसंतिह। ततोरागस्ततोद्वेष स्ततोनर्थोमहान्भवेत् १० तस्मात्सर्वप्रयत्नेन ज्ञानंसम्पादयेन्नरः। कुर्वन्नेवेहकर्मा णीत्यतःकर्माप्यवश्यकम् ११ ज्ञानादेवहिकैवल्यमतःस्यात्तत्समुच्चयः। सहायतां

कर्म्मणिदोषंवदति अनर्थदानीति १० अत्रसमुच्चयवादिमतमुत्थापयति कुर्वन्नेवेहेति कुर्वन्नेवेहकर्माणि जिजीविषेच्छतंसमाः इतिश्रुत्यायावज्जीवं कर्म्मविहितं ज्ञानादेवहिकैवल्यमित्यादि श्रुत्याज्ञानमपिसंपा द्यत्वेनोक्तं तत्रयावज्जीवश्रुतेः संकोचेप्रमाणाभावाज्ज्ञानं कर्म्मचसमुच्चयेतयावज्जीवंपुरुषेणाश्रयणीय मित्यर्थः ११ नन्वज्ञाननाशेज्ञानस्यैवोपयोगात्कर्मकिंकरिष्यतीतिचेत्तत्राह सहायतामितिज्ञानस्य सहा

यंभविष्यतिकर्मेत्यर्थः १२ तस्माद्यावज्जीवंकर्मज्ञानं चाश्रयणीयमितिमतं केचिदाहुरित्याह इतिकोचिदि तितत्खंडयतितद्विरोधादिति यदिज्ञानोत्तरं कर्मसुभवेत्तदा ज्ञानकर्म्मणोः समुच्चयोवक्तव्यः सतुनैवसंभ वति तस्माद्यावज्जीवश्रुतेः संकोचोज्ञानेनसहावस्थानाविरोधान्नले पतितइत्यर्थः ननुकिमितिकर्मणोज्ञा नेन सहावस्थानं न संभवति तत्राहज्ञानाद्धृद्ग्रंथीति हृदयस्यग्रंथिरंतःकरणात्मदेहतादात्म्यरूपस्तस्य ज्ञानेनात्मसाक्षात्कारेणभेदोनाशः स्यात् तस्मिंश्चहृद्ग्रंथौमनुष्योहं ब्राह्मणोहंपरलोकेच्छावानहमित्या हरूपेसत्येवंकर्मसंभवस्तादृशमधिकारिणमुद्दिश्यैवकर्मविधानात्तस्मात्तयोर्नैकत्रावस्थानंसंभवतीत्यर्थः१३

व्रजेत्कर्म ज्ञानस्यहितकारिच १२ इतिकेचिद्वदंत्यत्र तद्विरोधान्नसंभवेत्। ज्ञानाद्धृद्ग्रं थिभेदःस्याद्धृद्ग्रंथौकर्मसंभवः १३ यौगपद्यंनसंभाव्यं विरोधात्तुततस्तयोः। तमः प्रकाशयोर्यद्वद्यौगपद्यंनसंभवेत् १४ तस्मात्सर्वाणिकर्माणि वैदिकानिमहामते। चित्तशुध्यंतमेवस्युस्तानिकुर्यात्प्रयत्नतः १५ शमोदमस्तितिक्षाच वैराग्यंसत्वसंभ

तदेवदृष्टान्तपुरःसरं स्पष्टयतियौगपद्यमिति ततस्तस्माद्धेतोस्तयोर्ज्ञानकर्मणोस्तमः प्रकाशयोरिवविरो धाद्यौगपद्यं न संभवतीति यावज्जीवश्रुतिरज्ञानविषयकैवेतिभावः १४ तर्हिकियत्पर्यंतंवैदिककर्ममर्यादेति चेत्तत्राह तस्मात्सर्वाणीति यथाज्ञानेनसहविरोधाद्यावज्जीवश्रुतेः संकोचस्तथा ज्ञानांगेनसहापिविरोधा त्तस्याः श्रुतेर्यावद्वैराग्यादिप्राप्तिपर्यंतमिति संकोचः कर्त्तव्यस्तथाचचित्तशुद्ध्यंतमेवकर्माणि हेमहाम ते सिद्धानितानिप्रयत्नातीतियत्नेनश्रद्धादिपुरःसरं चित्तशुद्धिपर्यंतं कुर्यादित्यर्थः १५ तस्यैवमर्यादा

माह शमइतिशमोंतरिन्द्रियनिग्रहोदमोवाह्येंद्रियनिग्रहस्तितिक्षाशीतोष्णादिसहिष्णुत्वं वैराग्यमिहा
मुत्रफलभोगविरागः सत्वसंभवोंतःकरणगतसत्वस्यशुद्धिः एतत्सिद्धिपर्यंतमेव कर्माणिनततःपरमि
त्यर्थः १६ तदंतेकर्म्मत्यागस्तुसंन्यासेनैवकर्त्तव्योनान्यथेत्याह तदंतेचैवेतिसंन्यस्यसंन्यासाश्रमं गृही
त्वेत्यर्थः विधिनासंपादितकर्मणोविधिनैवत्यागस्ययुक्तत्वादितिभावः संन्यस्यश्रवणंकुर्यादिति वाक्या
त्संन्यासोत्तरं श्रवणार्थं गुरुमाश्रयेत् आत्मवान् स्वाधीनांतःकरणइत्यर्थः श्रोत्रियमधीतवेदवेदार्थं ब्रह्म
निष्ठं ब्रह्मानुभविनं निर्व्याजयानिष्कपटभक्त्या तथाचश्रुतिः ॥ यस्यदेवेपराभक्तिर्यथादेवे तथागुरौ। तस्यै

**वः। तावत्पर्यंतमेवस्युः कर्माणिनततःपरम् १६ तदंतेचैवसंन्यस्य संश्रयेद्गुरुमात्मवा**
**न्। श्रोत्रियंब्रह्मनिष्ठंच भक्त्यानिर्व्याजयापुनः १७ वेदांतश्रवणंकुर्यान्नित्यमेवमतं**
**द्रितः। तत्वमस्यादिवाक्यस्य नित्यमर्थंविचारयेत् १८ तत्वमस्यादिवाक्यंतु जीवब्र**
**ह्मैक्यबोधकम्। ऐक्येज्ञातेनिर्भयस्तु मद्रूपोहिप्रजायते १९ पदार्थावगतिःपूर्वं वाक्या**

ते कथिताह्यर्थाः प्रकाशंतेमहात्मनः १७ गुरुमाश्रित्यवेदान्तश्रवणं नित्यमतंद्रितो नामालस्यादि दोष
शून्यः कुर्यादित्याह वेदान्तश्रवणमिति १८ किंतद्वाक्यविचारेण फलंभवति तत्राह तत्त्वमस्यादीति
मद्रूपोहीति ब्रह्मविद्ब्रह्मैवभवतीति श्रुतेरित्यर्थः १९ कथंवाक्यंविचारणीयमिति चेत्तत्राह पदार्थावगति
रितिवाक्यार्थज्ञानं प्रतिपदार्थज्ञानस्यकारणत्वात्पूर्वंपदार्थं ज्ञात्वावाक्यार्थं विचारयेदित्यर्थः तर्हिकोसा
वत्रपदार्थः तत्राह तत्पदस्येति हेगिरेपर्वततत्वमसीति वाक्यस्थंयत्तत्पदं तस्यार्थोहं सर्वेश्वरीपरिकी

र्त्तितः तत्पदंभुवनेश्वर्याः षड्गुणैश्वर्यसंपन्नाया ममवाचकमित्यर्थः २० त्वंपदंतुजीववाचकमित्याह त्वंपदस्येति उभयोर्जीवेश्वरयोरैक्यमसिपदेनोच्यत इत्याहउभयोरिति २१ ननुजीवेश्वरयोरत्यंत विरुद्धधर्मवतोः कथंश्रुत्याभेदः प्रतिपाद्यतेइति चेद्भागत्यागलक्षणयेत्याह वाच्यार्थयोरिति वाच्यार्थयोः जीवेश्वरयोर्विरुद्धधर्मवत्वादित्यर्थः जीवस्यासर्वज्ञत्वपरिच्छिन्नत्वादयो निकृष्टधर्मा ईश्वरस्य सर्वज्ञत्वव्यापकत्वादयउत्कृष्टधर्मास्तथाच विरुद्धधर्मविशिष्टयोरैक्यमभेदोनैव घटेतह इदं सत्यमित्यर्थः तर्हिकथमभेदः प्रतिपाद्यत इति चेत्तत्राह लक्षणातइति यतो विरुद्धयोरैक्यंनघटते तत्तस्मा

र्थावगतिस्ततः। तत्पदस्यचवाच्यार्थो गिरेहंपरिकीर्तितः २० त्वंपदस्यचवाच्यार्थो जीवएवनसंशयः। उभयोरैक्यमसिना पदेनप्रोच्यतेबुधैः २१ वाच्यार्थयोर्विरुद्धत्वादैक्यंनैवघटेतह। लक्षणातःप्रकर्त्तव्या तत्वमोःश्रुतिसंस्थयोः २२ चिन्मात्रंतयोर्लक्ष्यं तयोरैक्यस्यसंभवः। तयोरैक्यंतथाज्ञात्वा स्वाभेदेनाद्वयोभवेत् २३ देवदत्तःस

च्छ्रुतिस्थयोस्तत्वमोस्तत्वंपदयोर्लक्षणाकर्त्तव्येत्यर्थः २२ ननुकस्मिन्नर्थेलक्षणाकर्तव्यातत्राह चिन्मात्रं त्विति सर्वज्ञत्वादिविशिष्टं ब्रह्मचैतन्यमीश्वरः सर्वज्ञत्वादिविशिष्टं ब्रह्मचैतन्यं जीवस्तत्रधर्मद्वयं विहाय चिन्मात्रमेवभागत्यागलक्षणया ग्राह्यंतस्मिन्गृहीते तयोर्लक्ष्यार्थयोरैक्यस्य संभवोस्तीत्यर्थः ननुतादृशा भेदज्ञानेनकिं भविष्यति तत्राह तयोरितिस्वाभेदेनतयोरैक्यं ज्ञात्वाद्वयोभवेदिदं महाफलमस्तीतिभावः २३ ननुलोकेक्वत्यागलक्षणा दृष्टेति चेत्तत्राह देवदत्तःसएवेतिसोयं देवदत्तइत्यत्र तत्काल

विशिष्टदेवदत्तस्यैतत्कालविशिष्टदेवदत्तस्यभेदेपि तत्कालवैशिष्ट्य तत्कालवैशिष्ट्यरूपधर्मद्वय त्यागेनाविरुद्धां व्यक्तिभागत्यागलक्षणया गृहीत्वाऽभेदप्रत्यभिज्ञाक्रियते इतितत्र लक्षणास्मृतादृष्टे त्यर्थः अनेनानुभवेनस्थूलादिदेहत्रयरहिताभवति इत्याह स्थूलादीति २४ देहत्रयंस्पष्टयति पंचीकृतेति २५ मिथ्यात्वेहेतुर्मायामयत्वतइति २६ । २७ अंतःकरणेसुखदुःखादेरवबोधकइत्युक्तम् २८

एवायमितिवल्लक्षणास्मृता । स्थूलादिदेहरहितो ब्रह्मसंपद्यतेनरः २४ पञ्चीकृतम हाभूतसंभूतःस्थूलदेहकः । भोगालयोजराव्याधिसंयुतःसर्वकर्मणाम् २५ मिथ्याभू तोयमाभाति स्फुटंमायामयत्वतः । सोयंस्थूलउपाधिःस्यादात्मनोमेनगेश्वर २६ ज्ञानकर्मेन्द्रिययुतं प्राणपञ्चकसंयुतम् । मनोबुद्धियुतंचैतत्सूक्ष्मंतत्कवयोविदुः २७ अपञ्चीकृतभूतोत्थः सूक्ष्मदेहोयमात्मनः । द्वितीयोयमुपाधिःस्यात्सुखादेरवबोध कः २८ उपाधिविलयेजाते केवलात्मावशिष्यते । देहत्रयेपञ्चकोशा अन्तःस्थाःस न्तिसर्वदा २९ पञ्चकोशपरित्यागे ब्रह्मपुच्छंहिलभ्यते । नेतिनेतीत्यादिवाक्यैर्मम रूपंयदुच्यते ३० नजायतेम्रियतेयं कदाचिन्नायंभूत्वा नवभूवकश्चित् । अजोनित्यः

देहत्रयेति स्थूलसूक्ष्मकारणदेहत्रयमध्ये एव पंचकोशा अन्नमयप्राणमयमनोमयविज्ञानमयानन्द मयाख्याअंतर्भूताः संतीत्यर्थः २९ ततश्चदेहत्रयत्यागेन पंचकोशत्यागेसति ब्रह्मपुच्छंप्रतिष्ठेति श्रुत्युक्तंवस्तुलभ्यतइत्यर्थः तदेवब्रह्मनेतिनेतीत्यादिवाक्यैः सर्वनिषेधावधित्वेनोच्यतइत्यर्थः ३० इदं

अनुत्पन्नोनिरंतरंवभूवैवेत्यर्थः
ब्रह्मरूपं तन्नजायते नोत्पद्यतेनवाम्रियतेतथायमात्माभूत्वानवभूवकिंतु तावेदितावयाः ३१। ३२ अणो
तत्रहेतुरजो नित्यइत्यादि त्रिकारत्रयनिषेधेन षड्भावविकाराअपिनेत्याह गुहायांबुद्धौनिहितः स्थापितस्तत्रानुभवात् तस्यास्या
रणीति अणोप्यणुतरः महतोऽप्योमादेरपिमहत्तरः संकल्पविकल्परहितः पश्यति ततो वीतशोकोभव
त्मनोमहिमानंतं धातुः प्रसादाच्चित्तप्रसादादक्रतुः रथिनंरथस्वामिनमात्मानं विद्धि श
तीत्यर्थः ३३ अथकठवल्ल्युक्तरथरूपकल्पनामाह आत्मानमिति

हन्ताचेन्मन्यतेहन्तुंहतश्चेन्मन्यते
शाश्वतोयंपुराणोनहन्यतेहन्यमानेशरीरे ३१
हतम् । उभौतौनविजानीतो नायंहन्तिनहन्यते ३२ अणोरणीयान्महतो महीयाना
त्मास्यजन्तोर्निहितोगुहायाम् । तमक्रतुःपश्यतिवीतशोकोधातुःप्रसादान्महिमानम
३च ३३ आत्मानंरथिनंविद्धि शरीरंरथमेवतु । बुद्धिंतुसारथिंविद्धि मनःप्रग्रहमेवच
३४ इन्द्रियाणिहयानाहुर्विषयांस्तेषुगोचरान् । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्म
नीषिणः ३५ यस्त्वविद्वान्पुमान्भवत्यमनस्कःसदाशुचिः । नतत्पदमवाप्नोति सं

इंद्रियाण्येवहयास्तस्मिन् रथेविद्वांसआहुः
रीरमेवरथं विद्धि मनःप्रग्रहमश्वाकर्षणरज्जुभूतं विद्धि ३४ पूर्वोक्तस्य विशिष्टं रूपमाह
गोचरान्गन्तव्यमार्गान् विषयानाहुर्विषयेष्वेवानिरन्तरमस्य गमनात्रथिनः कूटस्थमितिशेषोर्थात् तंतादृशं
आत्मेन्द्रियेति आत्माचिदाभासः इन्द्रियाणिमनश्चेत्येतत्त्रितयविशिष्टं ३५ एवंसति
कूटस्थंभोक्तेत्याहुर्भोक्तारंरथिनमाहुरित्यर्थः इतिशब्देनकर्मत्वस्याभिधानाद्द्वितीयाभावः

यस्तुपुरुषोविद्वान् विवेकीअमनस्कोऽस्वाधीनमनाश्चभवति सदाऽशुचिश्चसत्कर्मरहित इत्यर्थः सपुरु षोनतत्पदंपरमात्मपदं प्राप्नोति किंतर्हि संसारंचाधिगच्छति संसारंप्रत्येवगच्छतीत्यर्थः ३६ यस्तुतद्विपरीतोभवतितत्राहयस्त्विति यस्माद्भूयोनजायते तत्पदमित्यर्थः ३७ किंतत्पदमित्याह विज्ञानसारथिरिति मदीयं यत्परमंपदंपद्यतेज्ञातिभिः प्राप्यतेयन्मदीयं परमंरूपंसच्चिदानंदः वंद्यतत्परमंपदमित्यर्थः ३८ उप संहरतिइत्थमितिश्रुत्यावेदान्तश्रवणेनमत्याश्रुतस्यमननेनानिश्चित्य संशयविपर्यासरहितंपरोक्षतोज्ञात्वा

सारंचाधिगच्छति ३६ यस्तुतद्ज्ञानवान्भवति समनस्कःसदाशुचिः । सतुतत्पदमाप्नोति यस्माद्भूयोनजायते ३७ विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोध्वनःपारमाप्नोति मदीयंयत्परंपदम् ३८ इत्थंश्रुत्याचमत्याच निश्चित्यात्मानमात्मना । भावयेन्मामात्मरूपां निदिध्यासनतोपिच ३९ योगवृत्तेःपुरास्वस्मिन् भावयेदक्षरत्रयम् । देवीप्रणवसंज्ञस्य ध्यानार्थंमंत्रवाच्ययोः ४० हकारःस्थूलदेहःस्याद्रकारःसूक्ष्मदेह

साक्षात्कारार्थमात्मनांतःकरणेनात्मरूपांमां निदिध्यासनतएकाग्रचित्तवृत्त्याभावयेदित्यन्वयः ३९ इत्थं निदिध्यासनाभ्यासेन यदासमाधियोग्यताचित्तस्यभवति तदासमाधेःपूर्वमित्थंध्यानंकृत्वा समाधिंकुर्यादित्याह योगवृत्तेरितिसमाधिवृत्तेः पुरापूर्वंस्वस्मिन्स्वशरीरेदेवीप्रणवसंज्ञस्य मायाबीजमंत्रस्याक्षरत्रयंवक्ष्यमाणंभावयेत् मंत्रवाच्ययोः मायाबीजमंत्रार्थयोः समष्टिव्यष्ट्योर्ध्यानार्थमित्यर्थः ४० तदेवाक्षरत्रयं तद्देवताभावनास्थानानिचाह ईकारइतिकारणात्माकारणदेहरूपईकार इत्यर्थः ह्रींकारोहंतुरीयकं अहं

तुरीयकं तद्धींकारवाच्यमेवेत्यर्थ इतिदेवीवाक्यमेतत् तुरीयस्यवाचको ह्रींकारइतियावत् ४१ यथाव्यष्टि देहेऽक्षरत्रयभावनाकृता तथैवसमष्टिदेहेपिकर्त्तव्येत्याह एवं समष्टीतिअक्षरत्रयभावनांकृत्वा समष्टि व्यष्ट्योः पिंडब्रह्मांडयोरेकत्वन्यायेनैकत्वंभावयेदित्याहसमष्टिव्यष्ट्योरिति ४२ इत्थंप्रथमतोभावनांकृत्वा ततोदेवींध्यायेदित्याहसमाधीति ४३ समाधिसामग्रीमाह प्राणापानाविति समौकृत्वाप्राणथामाभ्यासेने

कः। ईंकारःकारणात्मासौ ह्रींकारोहंतुरीयकम् ४१ एवंसमष्टिदेहेपि ज्ञात्वाबीजत्रयंक्र मात्। समष्टिव्यष्ट्योरेकत्वं भावयेन्मतिमान्नरः ४२ समाधिकालात्पूर्वंतु भावयित्वैव मादृतः। ततोध्यायेन्निलीनाक्षो देवींमांजगदीश्वरीम्४३ प्राणापानौसमौकृत्वा नासा भ्यंतरचारिणौ। निवृत्तिविषयाकांक्षो वीतदोषोविमत्सरः ४४ भक्त्यानिर्व्याजयायु क्तो गुहायांनिःस्वनेस्थले। हकारंविश्वमात्मानं रकारेप्रविलापयेत् ४५ रकारंतेज संदेवमीकारेप्रविलापयेत्। ईकारंप्राज्ञमात्मानं ह्रींकारेप्रविलापयेत् ४६ वाच्यवाच

त्यर्थः ४४ विलापनप्रकारमाह हकारंविश्वमिति विश्वं वैश्वानरात्मकमित्यर्थः विश्वशब्दस्य वैश्वा नरोपलक्षणत्वात् ४५ एवमुत्तरत्रापिरकारेइति रकारवाच्येसूक्ष्मदेहे हकारवाच्यं स्थूलदेहं विलापये दित्यर्थः ईकारेतद्वाच्ये कारणदेहेसूक्ष्मेदेहंविलापयेदित्यर्थः ह्रींकारेह्रींकारवाच्ये ब्रह्मणिईकारवाच्यंकार णदेहं विलापयेदित्यर्थः ४६ तच्छिखांतरे चैतन्याख्यदीपशिखान्तरेइत्यर्थः तथाचश्रुतिःतस्याःशिखाया

मध्येपरमात्माऽवस्थितइति ४७ एवंध्यानेनसाक्षात्कारोभवति तेनचमद्रूपएवभवतीत्याह इतिध्याने
नेति ४८ दृष्ट्वानाशकोभवेदित्यन्वयः विस्तरस्तुमत्कृतदेवीगीताबृहट्टीकायांद्रष्टव्यः ४९ ॥

इतिश्रीदेवीभागवतेतिलकेगौडपाठानुसारिव्याख्यानेसप्तमस्कंधेदेवीगीतायांचतुस्त्रिंशोऽध्यायः ३४ ॥

अर्द्धाधिकद्विपञ्चाशत्श्लोकानामत्रसादरम्।योगस्यमंत्रसिद्धेश्चसाधनंसम्यगुच्यते॥पूर्वाध्यायांतेयोग

कताहीनं द्वैतभावविवर्जितम्। अखण्डंसच्चिदानंदं भावयेत्तच्छिखांतरे ४७ इति
ध्यानेनमांराजन् साक्षात्कृत्यनरोत्तमः। मद्रूपएवभवति द्वयोरप्येकतायतः ४८ यो
गयुक्त्यानयादृष्ट्वामामात्मानंपरात्परम्। अज्ञानस्यसकार्यस्यतत्क्षणेनाशकोभवेत्४९

इतिश्रीदेवीभागवतेमहापुराणेसप्तमस्कंधेदेवीगीतायांचतुस्त्रिंशोऽध्यायः॥ ३४ ॥

हिमालयउवाच योगंवदमहेशानिसांगंसंवित्प्रदायकम्। कृतेनयेनयोग्योहंभवेयंतत्त्व
दर्शने १ श्रीदेव्युवाच नयोगोनभसःपृष्ठे नभूमौनरसातले। ऐक्यंजीवात्मनोराहु
र्योगंयोगविशारदाः २ तत्प्रत्यूहाःसमाख्याता योगविघ्नकरानघ। कामक्रोधौलोभमो

युक्त्यानयादृष्ट्वामामात्मानं परात्परमिति वाक्येनात्मदर्शने योगस्यसाधनत्वमुक्तं तत्रकीदृशोयोगइति
पृच्छतियोगंवदेतिसंवित्प्रदायकं ब्रह्माकारसंवित्साधनमित्यर्थः १ ऐक्यमिति जीवात्मनोरैक्यमभेदवि
षयकवृत्तिर्यासायोगशब्देनोच्यतइत्यर्थः २ तत्प्रत्यूहाः तस्याःवृत्तेः शत्रवः केतेषट् तदाह कामक्रोधाविति

एतेपदार्थाः प्रसिद्धाएव ३ योगांगैरितियोगांगैर्यमनियमादिभिर्वक्ष्यमाणैः प्रथमतस्तच्छत्रून्भित्त्वानाश
यित्वानंतरंयोगिनोयोगंतां वृत्तिंप्राप्नुयुरित्यर्थः ४ योगांगान्याहयमंमितिंअष्टस्वंगेषु प्रथमांगस्ययमस्यस्व
रूपमाह अहिंसेति अहिंसापरपीडनाभावः सत्यंसत्यभाषणमस्तेयंचौर्यमात्रस्याभावः ब्रह्मचर्यंदर्शनंस्पर्श
नंकेलिः कीर्त्तनंगुह्यभाषणं संकल्पोध्यवसायश्च क्रियानिर्वृत्तिरेवचेत्यष्टविधमैथुनत्यागः दयाभूतेषुकरुणा
आर्जवंऋजुतासर्वापेक्षयास्वस्याल्पत्वज्ञानंक्षमापमानादिसहनशीलत्वं पृथ्वीवत्धृतिः सर्वस्वनाशेपि

द्वौ मदमात्सर्य्यसंज्ञकौ ३ योगांगैरेवभित्त्वातान् योगिनोयोगमाप्नुयुः। यमंनियममा
सनप्राणायामौततःपरम् ४ प्रत्याहारंधारणाख्यं ध्यानंसार्धंसमाधिना। अष्टांगान्या
हुरेतानि योगिनांयोगसाधने ५ अहिंसासत्यमस्तेयं ब्रह्मचर्यंदयार्जवम्। क्षमाधृति
र्मिताहारः शौचंचेतियमादश ६ तपःसंतोषआस्तिक्यं दानंदेवस्यपूजनम्। सिद्धांत

धीरतामिताहारो द्वौभागौपूरयेदन्नैस्तोयेनैकंप्रपूरयेत् मारुतस्यप्रचारार्थंचतुर्थमवशेषयेदितिरीत्याल्पाहारः
शौचंवाह्याभ्यंतरशुद्धिः इतिदशसंख्यायमाइत्यर्थः५।६ नियमस्वरूपमाह तपइति तपोविध्युक्तानुष्ठानंन
कृच्छ्रादितस्य शरीरक्लेशकारित्वेनयोगोपकारित्वाभावात् संतोषोनामप्रारब्धेन यदुपस्थापितंतेनैवचेतस
स्तृप्तिः आस्तिक्यंवेददेवद्विजगुरुविश्वासः दानंयथाशक्तिसत्पात्रेद्रव्यत्यागः देवस्यपरमेश्वरस्यपूजनं
सिद्धान्तश्रवणंवेदान्तश्रवणंह्रीर्लज्जामतिः सत्कर्मसच्छास्त्रविषयेज्ञानं जपोगायत्रीप्रणवंभुवनेश्वरीमंत्र

प्रभृतिमंत्राणांहुतंनित्यहोमादि ७ आसनान्याह पद्मासनमिति तेव्युत्क्रमादिति पृष्ठदेशाद्धस्तद्वयंपरिवर्त्यानीयदक्षिणहस्तेनदक्षपादांगुष्ठंवामहस्तेनवामांगुष्ठंवध्नीयादित्यर्थः ८ । ९ । १० । ११ सीवन्याःइति

श्रवणंचैव ह्रीर्मतिश्चजपोहुतम् ७ दशैतेनियमाःप्रोक्ता मयापर्वतनायक । पद्मासनं स्वस्तिकंच भद्रंवज्रासनंतथा ८ वीरासनमितिप्रोक्तं क्रमादासनपंचकम् । ऊर्वोरुपरि विन्यस्य सम्यक्पादतलेशुभे ९ अंगुष्ठौचनिवध्नीयाद्धस्ताभ्यांव्युत्क्रमात्ततः । पद्मासनमितिप्रोक्तं योगिनांहृदयंगमम् १० जानूर्वोरन्तरेसम्यक् कृत्वापादतलेशुभे । ऋजुकायोविशेद्योगी स्वस्तिकंतत्प्रचक्षते ११ सीवन्याःपार्श्वयोर्न्यस्य गुल्फयुग्मंसुनिश्चितम् । वृषणाधःपादपार्ष्णी पाणिभ्यांपरिबन्धयेत् १२ भद्रासनमितिप्रोक्तं योगिभिःपरिपूजितम् । ऊर्वोःपादौक्रमान्न्यस्य जान्वोःप्रत्यङ्मुखांगुली १३ करौविदध्यादाख्यातं वज्रासनमनुत्तमम् । एकम्पादमधःकृत्वा विन्यस्योरुन्तथोत्तरे १४ ऋजुकायोविशेद्योगी वीरासनमितीरितम् । इडयाकर्षयेद्वायुं वाह्यंषोडशमात्रया १५ धारयेत्पूरितंयोगी चतुःषष्ट्यातुमात्रया । सुषुम्णामध्यगंसम्यक् द्वात्रिंशन्मात्रयाश

सीवनी अंडाधस्थाशिरागुल्फौवृषणाधःस्थितौयौपादयोःपार्ष्णिभागौहस्ताभ्यांबंधयेत् १२ । १३ । १४ । १५
इडयावामनासापुटेनषोडशमात्रयाषोडशप्रणवोच्चारणेनवाह्यंवायुमाकर्षयेत् यद्यपिमात्रात्रयोगशास्त्रोक्ता

पारिभाषिकी युक्ता तथापितस्याअपिवायुपरिच्छेदेएवतात्पर्य्येन वायुपरिच्छेदोभवति तद्ग्राह्यमित्यत्र तात्पर्यात् धारयेत् चतुःषष्टिसंख्यप्रणवोच्चारणपर्यंतं कुम्भकंकुर्यादित्यर्थः पुनः द्वात्रिंशत्प्रणवोच्चारणेन दक्षिणनासापुटेन विरेचयेदित्यर्थः १६ । १७ भूयोभूयः पुनःपुनः तस्याइडापिंगलादेःपिंगलेडादेः पुनरिडापिंगलादेः पुनः पिंगलेडादेः क्रमात्वाह्यं वायुमेवंसमाचरेत् गृह्णीयात् त्यजेदित्यर्थः मात्राणांप्रणवसंख्यानामप्युत्तरंवृद्धिः कर्तव्या तथाप्राणायामानामपि प्रथमतोद्वादशतदुत्तरं कतिचित्कालानंतरं षो

नैः १६ नाड्यापिंगलयाचैव रेचयेद्योगवित्तमः । प्राणायाममिमंप्राहुर्योगशास्त्रविशारदाः १७ भूयोभूयःक्रमात्तस्य वाह्यमेवंसमाचरेत् । मात्रावृद्धिक्रमेणैव सम्यक्द्वादशषोड़श १८ जपध्यानादिभिःसार्द्धं सगर्भंतंविदुर्बुधाः । तदपेतंविगर्भंच प्राणायामपरेविदुः १९ क्रमादभ्यस्यतःपुंसो देहेस्वेदोद्गमोधमः । मध्यमःकम्पसंयुक्तो भूमित्यागःपरोमतः २० उत्तमस्यगुणावाप्तिर्यावच्छीलनमिष्यते । इन्द्रियाणांविचर

डशेत्येवंक्रमेणवृद्धिः कर्तव्येत्यर्थः १८ सगर्भविगर्भभेदेन प्राणायामस्यद्वैविध्यमाह जपध्यानादिभिरिति स्वेष्टमंत्रजपध्यानसहितः प्राणायामः सगर्भस्तदपेतस्तद्राहितो विगर्भइत्यर्थः १९ कनिष्ठमध्यमोत्तमभेदेन प्राणायामलक्षणमाह क्रमादभ्यस्यत इतिप्राणायामेप्रथमतः स्वेदोद्गमोभवतिसोधमः प्राणायामः कंपसंयुतोमध्यमः भूमित्यागोभवति यस्मिन्प्राणायामः सउत्तमः भूमित्यक्त्वासनमुपर्येवातिष्ठातियदातदासभूमित्यागः इतिसंप्रदायःतदुक्तं भूमित्यागंतनोस्तनोतिपरइति २० उत्तमप्राणायामसिद्धिपर्यंतं

प्राणायामे कृते सतिफलमाह उत्तमस्येति गुणावाप्तिः वपुः प्रकाशोज्वलनस्यदीप्तिः रक्षागतावैव तनोर्लघुत्वमित्यादि गुणानामवाप्तिर्भवति यावत्पर्यन्तं शीलनमभ्यासइष्यते तावत्पर्यन्तमुत्तरोत्तरं गुणवृद्धिरेवभवतीत्यर्थः प्रत्याहारमाह इन्द्रियाणामिति विषयेषुविचरतामिंद्रियाणांतेभ्यो निरर्गलं निर्विघ्नं यदाहरणं सप्रत्याहारः २१ धारणामाह अंगुष्ठेति २२। २३ धारणामिति अंगुष्ठाद्यवयवेषु यत्प्राणवायोर्धारणंनिरोधः साधारणेत्यर्थः एतादृशोवायुः स्वाधीनोपेक्षितइतिभावः ध्यानमाह स

तां विषयेषुनिरर्गलम् २१ बलादाहरणंतेभ्यः प्रत्याहारोभिधीयते। अंगुष्ठगुल्फजानू रू मूलाधारालिंगनाभिषु २२ हृद्ग्रीवाकण्ठदेशेषु लम्बिकायांततोनसि । भ्रूमध्यमस्त केमूर्ध्निद्वादशांतेयथाविधि २३ धारणंप्राणमरुतो धारणेतिनिगद्यते। समाहितेनम नसा चैतन्यान्तरवर्त्तिना २४ आत्मन्यभीष्टदेवानां ध्यानंध्यानमिहोच्यते । समत्व भावनानित्यं जीवात्मपरमात्मनोः २५ समाधिमाहुर्मुनयः प्रोक्तमष्टांगलक्षणम्। इदा

मार्हातिअंतःकरणंचैतन्यांतर्वर्त्तिध्यानेनकृत्वा तस्मिन्नात्मनि अभीष्टदेवानांयत्ध्यानंतद्ध्यानशब्देनोच्यत इत्यर्थः २४ समत्वभावनाद्वयोरैक्यभावनासंप्रज्ञातसमाधिनैव भवतीति समत्वभावनाशब्देन संप्र ज्ञातसमाधिरुच्यते अतएवयोगसूत्रे तद्भाष्येच संप्रज्ञातसमाधेरेवाष्टसुयोगांगेषुग्रहणं निर्विकल्पकस माधिस्त्वंगीभवतीत्युक्तं २५ इत्थमष्टांगयोगमभिधायाधुना शरीरेनाडीस्थानानि आधारचक्रस्वरूपा णितद्ध्यानफलानि चोपदिशति इदानींकथयेतेहमिति मन्त्रयोगंमंत्राणां शारदातिलकोक्तछिन्नादिदो

षट्दुष्टानां मंत्राणांसिद्धिप्रदंयोगमित्यर्थः २६ विश्वंशरीरमिति पिंडब्रह्मांडयोरेकत्वाच्छरीरमिदं विश्व मेवभवति ब्रह्मांडमेवभवति तदपिपंचभूतात्मकं चन्द्रसूर्याग्निभिर्युक्तं जीवब्रह्मैक्यरूपकं यथाभवति तथेदमप्यस्तीत्याह पंचभूतेति २७ तदर्धेनकोट्यर्धेनसार्धत्रिकोटयइत्यर्थः २८ प्रधानासुषुम्णानाडी मेरुदंडे पृष्ठस्थवंशेस्थितामूलाधारमारभ्यपृष्ठमवंशमार्गेणब्रह्मरंध्रपर्यंतंगतेत्यर्थः तस्यावामे इडादक्षिणे

नाकथयेतेहं मन्त्रयोगमनुत्तमम् २६ विश्वंशरीरमित्युक्तं पञ्चभूतात्मकंनग । चन्द्र सूर्याग्नितेजोभिर्जीवब्रह्मैक्यरूपकम् २७ तिस्रःकोट्यस्तदर्धेन शरीरेनाडयोमताः । तासुमुख्यादशप्रोक्तास्ताभ्यस्तिस्रोऽत्यत्रस्थिताः २८ प्रधानामेरुदण्डेत्र चन्द्रसूर्याग्निरूपिणी । इडावामेस्थितानाडी शुभ्रा तुचन्द्ररूपिणी २९ शक्तिरूपातुसानाडी साक्षादमृतविग्रहा । दक्षिणेवापिंगलाख्या पुंरूपासूर्यविग्रहा ३० सर्वतेजोमयीसातु सुषुम्णाब्रह्मरूपिणी । तस्यामध्येविचित्राख्ये इच्छाज्ञानंक्रियात्मकम् ३१ मध्येस्वयं भूलिंगंतु कोटिसूर्यसमप्रभम् । तदूर्ध्वंमायाबीजन्तु हरात्माबिन्दुनादकम् ३२ तदूर्ध्वं

पिंगला अस्तीत्याह इडावामेतिइडावामेति २९ शक्तिरूपाप्रकृतिरूपा ३० तस्यामध्येसुषुम्णायामध्ये विचित्राख्येचित्राख्येनाड्यामित्यर्थः सुषुम्णा मूलदेशेचित्रानाड्यस्तीति तस्यामध्येतु चित्राख्या नाडी सूक्ष्मातुवर्तत इतिवचनेनतत्रान्तरेउक्तं ३१ मध्येइति चित्रानाडी मध्येइत्यर्थः हरात्माबिंदुनादकं आत्मामायाहकाररेफईकारबिन्दुनादात्मकमित्यर्थः ३२ शिखाकारा दीपशिखाकारा हेमरूपाभं पीतव

र्णवादिसांतचतुर्द्दलं चतुर्द्दलेषुवशषसइति चत्वारोवर्णाभवंतीत्यर्थः ३३। ३४ वादिसांतेति वकारादिस
कारान्तषड्वर्णैर्युक्तमित्यर्थः ३५ स्वशब्देनपरंलिंगं स्वस्याधिष्ठानं यतस्तस्मात्स्वाधिष्ठानमित्युच्यतइ

तुशिखाकारा कुण्डलीरक्तविग्रहा। देव्यात्मिकातुसाप्रोक्ता मदभिन्नानगाधिप ३३ त
द्बाह्येहेमरूपाभं वादिसान्तचतुर्दलम्। द्रुतहेमसमप्रख्यं पद्मंतत्रविचिन्तयेत् ३४
तदूर्ध्वेऽनलप्रख्यं षड्दलंहीरकप्रभम्। वादिसांतषडर्णेन स्वाधिष्ठानमनुत्तमम् ३५
मूलमाधारषट्कोणां मूलाधारंततोविदुः। स्वशब्देनपरंलिंगंस्वाधिष्ठानंततोविदुः
३६ तदूर्ध्वेनाभिदेशेतु मणिपूरंमहाप्रभम्। मेघाभंविद्युदाभंचबहुतेजोमयंततः ३७
मणिवद्भिन्नंतत्पद्मंमणिपद्मंतथोच्यते। दशभिश्चदलैर्युक्तंडादिफान्ताक्षरान्वितम् ३८
विष्णुनाधिष्ठितंपद्मंविष्ण्वालोकनकारणम्। तदूर्ध्वेनाहतंपद्ममुद्यदादित्यसन्निभ
म् ३९ कादिठान्तदलैरर्कपत्रैश्चसमधिष्ठितम्। तन्मध्येबाणलिंगंतुसूर्यायुतसमप्रभ
म् ४० शब्दब्रह्ममयंशब्दानाहतंतत्रदृश्यते। अनाहताख्यंतत्पद्मं मुनिभिःपरिकी

त्यर्थः ३६। ३७ डादिफांताक्षरैर्युक्तमित्यर्थः ३८। ३९ अर्कपत्रेणद्वादशपत्रेणयुक्तं ककारादिठकारान्ता
निद्वादशाक्षराणिदलेषुज्ञेयानि ४० शब्दानाहतं अनाहतो ताडनंविनापिजायमानः शब्दःसोनाहतः शब्द

यस्मिन्स्तच्छब्दानाहतं वाहिताग्न्यादित्वात्साधुः४१ पुरुषाधिष्ठितं रुद्राधिष्ठितं इत्यर्थः ४२ स्वरैः षोडश भिरितिषोडशपत्रेषुषोडशस्वराइत्यर्थः जीवस्यहंसस्य परमात्मनोवलोकनाज्जीवं यस्माद्विशुद्धंतनुतेततो विशुद्धमित्यन्वयः तत्रानाहतंचक्रं हृदयेविशुद्धिचक्रं कंठेआज्ञाचक्रं भ्रूमध्येइतितुग्रंथांतरादवसेयंअनाहतः शब्दोमध्यमावाणीरूपोज्ञेयः४३तदूर्ध्वेतुभ्रूमध्येइत्यर्थः ४४आज्ञासंक्रमणमितितास्मिँस्थले निहितचित्तस्य

र्त्तितम्४१ आनंदसदनंतत्तुपुरुषाधिष्ठितंपरम्।तदूर्ध्वेतुविशालाख्यं दलषोडशपंकजम्४२स्वरैःषोडशभिर्युक्तं धूम्रवर्णंमहाप्रभम् । विशुद्धंतनुतेयस्माज्जीवस्यहंसलोकनात् ४३ विशुद्धंपद्ममाख्यातमाकाशाख्यंमहाद्भुतम् । आज्ञाचक्रंतदूर्ध्वेतु आत्मनाधिष्ठितंपरम् ४४ आज्ञासंक्रमणंतत्र तेनाज्ञेतिप्रकीर्तितम् । द्विदलंहक्षसंयुक्तं पद्मंतत्सुमनोहरम् ४५ कैलाशाख्यंतदूर्ध्वेतु रोधिनीतुतदूर्ध्वतः । एवंत्वाधारचक्राणिप्रोक्तानितवसुव्रत ४६ सहस्रारयुतंबिंदुस्थानंतदूर्ध्वमीरितम् । इत्येतत्कथितंसर्वं योगमार्गमनुत्तमम् ४७ आदौपूरकयोगेनाप्याधारेयोजयेन्मनः । गुदमेढ्रांतरेशक्ति

पुरुषस्य सर्वपदार्थसाक्षात्कारेणैवंभूतमेवंवर्त्तते एवंभविष्यतीतिज्ञानेनाज्ञायाइतः परंत्वयैवंकर्तव्यमिति परमेश्वराज्ञायाःसंक्रमणंभवतितेनहेतुना तदाज्ञाचक्रमितिकीर्त्तितमित्यर्थः हक्षवर्णद्वयसंयुतं यत्रद्वयंयुक्तमित्यर्थः ४५ तदूर्ध्वं कैलाशचक्रं तदूर्ध्वेरोधिनीचक्रमित्यर्थः अनयोः स्वरूपंमत्कृतदेवीगीताबृहट्टीकायां द्रष्टव्यं४६सर्वोपरिविद्यमानंसहस्रारं चक्रमाहसहस्रारेति बिंदुस्थानंपरमात्मस्थानं ज्ञात्वाकिंकर्तव्यं४७ 

तत्राहआदावितिप्रथमतः पूरकयोगेनवाह्यंवायुमाकृष्य कुंभकंकृत्वासमनोवायुसहितं मूलाधारेयोजयेन्नये दित्यर्थः अनंतरंगुदस्यमेढ्रस्यलिंगस्यांतरेमध्येमूलाधारचक्रे इत्यर्थः विद्यमानास्थितायाशक्तिः कुण्ड लिनींतामाकुंच्य मूलाधारगतवायुनापीडयित्वाप्रबोधयेत् उत्थापयेदित्यर्थः ४८ लिंगभेदेति तामु- त्थाप्य लिंगभेदक्रमेण पूर्वोक्तचक्रगतवत्तेजोमयस्वयोग्यादि लिंगानांभेदाभेदनंतन्मार्गेण नयनंतत्क्रमे णैव तांकुंडलिनींशक्तिंबिंदुचक्रं सहस्रारंतत्प्रापयेत् शंभुनेतिसहस्रारं पद्मस्थितेनशंभुनातांकुंडलिनीमे

स्तामाकुंच्यप्रबोधयेत ४८ लिङ्गभेदक्रमेणैवविन्दुचक्रंचप्रापयेत । शंभुनातांपरा
शक्तिमेकीभूतांविचिन्तयेत् ४९ तत्रोत्थितामृतंयत्तु द्रुतलाक्षारसोपमम् । पाययि
त्वातुतांशक्तिमायाख्यांयोगसिद्धये ५० षट्चक्रदेवतास्तत्र संतर्प्यामृतधारया ।
आनयेत्तेनमार्गेणमूलाधारंततःसुधीः ५१ एवमभ्यस्यमानस्याप्यहन्यहनिनिश्चितम् ।
जरामरणदुःखाद्यैर्मुच्यतेभवबंधनात् ५२ शास्त्रोक्तदूषितामंत्राः सर्वेशुध्यंतिनान्य

कीभूतांसंगतां विभावयेदित्यर्थः ४९ तत्रोत्थितेति तत्रशिवशक्त्योःसंगमे यदुत्थितममृतंद्रुतलाक्षारस मानवर्णंतदमृतं तांकुंडलिनींपाययित्वा तेनामृतेनानंदस्वरूपेण तांतृप्तांकृत्वेत्यर्थः ५० षट्चक्रेतिपू र्वोक्तानियानिषट्चक्राणि तच्चक्रस्थितादेवता लिंगरूपाअमृतधारया शक्तिसमागमोत्थानन्दरसरू पामृतवृष्ट्यासंतर्प्य पुनस्तेनैव मार्गेण मस्तकंनीताकुण्डलिनी तेनैव मार्गेणमूलाधारंतां कुण्डलिनींन येदित्यर्थः ५१।५२ शास्त्रोक्तेति छिन्नादिदोषदूषितामंत्राअनेनयोगेनसिध्यंतीत्यर्थः तदुक्तंशारदातिलके

इत्यादिदोषदुष्टांस्तान्मंत्रानात्मनियोजयेत् शोधयेद्बुद्धपवनोवद्धयायोनिमुद्रयेति ५३ । ५४ प्रसंगेन धारणास्वरूपं पूर्वमुक्तमेव विषयभेदे विशदयति इदानीमिति एवमष्टांगयोगनिरूपणो वायुधारणोक्ता

था । येगुणाःसंतिदेव्यामेजगन्मातुर्यथानथा ५३ तेगुणाःसाधकवरेभवंत्येवनचान्यथा । इत्येवंकथितंतातवायुधारणमुत्तमम् ५४ इदानींधारणाख्यांतु शृणुष्वावहितोमम । दिक्कालाद्यनवच्छिन्नदेव्यांचेतोविधायच ५५ तन्मयोभवतिक्षिप्रंजीवब्रह्मैक्ययोजनात् । अथवासमलंचेतोयदिक्षिप्रंनसिध्यति ५६ तदावयवयोगेनयोगीयोगान्समभ्यसेत् । मदीयहस्तपादादावंगेतुमधुरेनघ ५७ चित्तंसंस्थापयेन्मंत्री स्थानेस्थानेजयात्पुनः । विशुद्धचित्तःसर्वस्मिन् रूपेसंस्थापयेन्मनः ५८ यावन्मनोलयंयाति देव्यांसंविदिपर्वत । तावदिष्टमनुंमंत्री जपहोमैःसमभ्यसेत् ५९ मंत्राभ्यासेनयोगेनज्ञेयज्ञानायकल्पते। नयोगेनविनामंत्रोनमंत्रेणविनाहिसः६० द्वयोरभ्यासयोगोहिब्रह्मसंसिद्धिकारणम् । तमःपरिवृतेगेहेघटोदीपेनदृश्यते ६१ एवंमायावृतोह्यात्मामनुनागोचरीकृतः । इतियोगविधिःकृत्स्नः सांगःप्रोक्तोमयाधुना ६२ गुरूपदेशतोज्ञेयोनान्यथाशास्त्रकोटिभिः ॥

नतुचित्तस्यधारणोच्यते इत्यर्थः अर्थःस्पष्टएव ५५ । ५६ इत्थंध्यानयोगकरणेयस्ययावद्योग्यतानास्ति ५४

तावत्पर्यंतं तेनपुरुषेणाकिंकर्तव्यमितिचेत्तत्राह यावन्मनइति ५७ । ५८ । ५९ । ६० । ६१ । ६२ विस्त रस्तुमत्कृतदेवीगीताबृहट्टीकायांद्रष्टव्यः ॥

इतिश्रीदेवीभागवतेतिलकेसप्तमस्कंधेदेवीगीतायांपंचत्रिंशोऽध्यायः ३५ ॥

त्रिंशच्छ्लोकैर्मुख्यतत्त्वं ब्रह्मरूपंतुवर्ण्यते । ब्रह्मविद्यादुर्लभेति यथावदभिधीयते ॥ अत्रअर्धश्लोकोप्यधिकः एतादृशंयोगं साधयित्वायद्वस्तुध्येयं तद्वर्णयति श्रीदेव्युवाचेति १ अत्राविः सन्निहि

इतिश्रीदेवीभागवतेमहापुराणेसप्तमस्कंधेदेवीगीतायांपंचत्रिंशोध्यायः३५ ॥

श्रीदेव्युवाच॥इत्यादियोगयुक्तात्माध्यायेन्मांब्रह्मरूपिणीम् । भक्त्यानिर्व्याजयारा जन्नासनेसमुपस्थितः १ आविः सन्निहितंगुहाचरन्नाममहत्पदम् । अत्रैतत्सर्वमर्पितमे

तमित्यादिब्रह्मैवेदंविश्वं वरिष्ठमित्येताः श्रुतयोमुंडकोपनिषदि अन्यूनानतिरिक्ताः संतिताश्चश्रुतयो भगवत्पादैः श्रीमच्छङ्कराचार्यैर्व्याख्याताएवमुण्डकोपनिषद्भाष्येततस्तासांव्याख्यानं संक्षेपेणैव क्रियते आविरिति आविःशब्दोनिपातः प्रकाशवाचीब्रह्मविद्योपलब्ध्यात्मना प्रकाशमानमेव सदेतिभावयेदित्यर्थः सन्निहितमतिसमीपवर्तिगुहायां बुद्धौचरिते तत्रोपलभ्यते सर्वव्यापकमपीति गुहाचरं नामपद्यते सर्वैर्मुनिभिर्योगादिसाधनैः प्राप्यतेइतिपदं महच्चतत्पदं चेतिमहत्पदं यत्रास्मिन्ब्रह्मणि सर्वमाकाशादिसमर्पितं स्थापितं कल्पितमित्यर्थः ततस्तस्यमिथ्यात्वादिदमेवसर्वैः प्राप्यमित्यर्थः किमत्रसमर्पितं तदाह एजदिति एजच्चलत्पक्ष्यादिप्राणत् प्राणितीति प्राणनमनुष्यादिनिमिषत् निमेषादि

क्रियावत् यच्चानिमिषंचशब्दात् तत्सर्वंब्रह्मण्येवसमर्पितमित्यर्थः २ एतज्जानथेति भगवतीवदतिहेदे वाः एतन्मद्रूपं ब्रह्मजानथावगच्छथ सदसद्वरेण्यं सत्कारणं मायासत्कार्यं जगत्तदुभयापेक्षयावरेण्यं श्रेष्ठं प्रजानांलोकानांविज्ञानात्परं तज्ज्ञानाविषयइत्यर्थः यतोवारिष्ठंश्रेष्ठं ततोनसर्वबुद्धिगम्यमित्यर्थः ३ तदेतदिति तदेतत्सर्वाश्रयदर्चिमत् सूर्य्यादितेजसामपिप्रकाशकं यतस्ततोतिशयदीप्तमित्यर्थः तद्वेद्धव्यं मनसा शरेण ताडयमक्षरं ब्रह्मसप्राणस्तदुतेदवाङ्मनोपितदेवतत्सत्यमवितथमतोमृतं

यजत्प्राणन्निमिषच्चयत् २ एतज्जानथसदसद्वरेण्यंपरंविज्ञानाद्यद्वरिष्ठंप्रजानाम् । यदर्चिमद्यदणुभ्योणुचयस्मिंल्लोकानिहितालोकिनश्च ३ तदेतदक्षरंब्रह्मसप्राणस्तदुवाङ्मनः । तदेतत्सत्यमस्तं तद्वेद्धव्यंसौम्यविद्धि ४ धनुर्गृहीत्वौपनिषदंमहास्त्रंशरंह्युपासानिशितंसंधयीत । आयम्यतद्भावगतेनचेतसा लक्ष्यंतदेवाक्षरंसौम्यविद्धि ५ प्रणवोधनुःशरोह्यात्मा ब्रह्मतल्लक्ष्यमुच्यते । अप्रमत्तेनवेद्धव्यंशरवत्तन्म

यितव्यंमनः समाधानं कर्त्तव्यमित्यर्थः ४ कथंवेद्धव्यंतदुच्यते धनुरिति औपनिषदमुपनिषद्भिर्बोधितं महास्त्रंमहच्चतदस्त्रंचेति महास्त्रंधनुर्गृहीत्वादायतथोपासाभिर्निशितं संतताभिध्यानेनतनूकृतंशरंतस्मिन्धनुषिसंधयति योजयेत् शरंसंधायसंस्थाप्यानंतरमायम्याकृष्यसेन्द्रियमंतःकरणं स्वविषयादिनिवर्त्यलक्ष्यएवस्थापयित्वेत्यर्थः तद्भावगतेनतस्मिन्ब्रह्मण्यक्षरे लक्ष्येभावनाभावस्तद्गतेन चेतसालक्ष्यंतदेवयथोक्तलक्षणं सौम्य हेपर्वतराज विद्धि ताडयेत्यर्थः ५ यदुक्तं धनुरादितदुच्यतेप्रणवइति प्रणव

ओंकारोदेवीप्रणवो वा धनुर्यथेष्वासनंलक्ष्ये शरस्यप्रवेशकारणंतथा चित्तशरस्यक्षरेलक्ष्येप्रवेशकारणं प्रणवःप्रणवेनह्यभ्यस्यमानेनसंश्रियमाणस्तदालंबनो प्रतिबंधेनाक्षरेवतिष्ठतेयथा धनुषाप्रक्षिप्तइषुर्लक्ष्ये तः प्रणवोधनुरिवधनुः शरोह्यात्मांतःकरणं हिशरः शरसदृशलक्ष्यवेधनाच्छरइवशरः अत्रलक्ष्यंतुत द्ब्रह्मैवोच्यत इत्याहब्रह्मतल्लक्ष्यमुच्यत इति अप्रमत्तेनैकाग्रचित्तेन तल्लक्ष्यंब्रह्मवेद्धव्यं यथाशरो लक्ष्यैकात्मतां प्राप्नोतितथादेहाद्यात्मप्रत्ययतिरस्कारेणाक्षरैकात्म्यंफल मायादयेदित्यर्थः ६ अक्षरस्य दुर्लक्षत्वात्पुनः पुनर्वचनंसुलक्षणार्थंयस्मिन्नितियस्मिन्नक्षरेद्यौः पृथिवी चांतरिक्षंचप्राणैः सहमनश्च

योभवेत् ६ यस्मिन्द्यौश्चपृथिवीचान्तरिक्षमोतंमनः सहप्राणैश्चसर्वैः । तमेवैकंजा
नथात्मानमन्यावाचो विमुंचथअमृतस्यैषसेतुः ७ अराइवरथनाभौसंहतायत्रना
ड्यः । सएषोंतश्चरतेबहुधाजायमानः ८ ओमित्येवंध्यायथात्मानंस्वस्तिवः पाराय

सर्वमर्पितंतमेवैकमात्मानं जानाथजानीयहेदेवाः यज्ज्ञात्वाचान्यवाचेंग परविद्यारूपाविमुंचथविमुंच तपरित्यजतयतोऽमृतस्यमोक्षस्य प्रापयेयंसेतुरिवसेतुः संसारमहोदधेस्तरणहेतुरित्यर्थः तथाचश्रुतिः तमेवविदित्वातिमृत्युमेतिनान्यः पंथाविद्यतेयनायेति ७ किंचअराइवयथारथनाभौ समर्पिता अराए वंसंहताः संप्रविष्टाएवयत्रयस्मिन् हृदयेनाड्यः तस्मिन्हृदयेबुद्धि प्रत्ययसाक्षिभूतः सएवप्रकृतः आत्मान्तर्मध्येचरतेचरतिवर्तते बुध्यादिप्रत्ययैर्जायमानइवजायमानोन्तःकरणोपाध्यनुविधायित्वाद्व दंतिलौकिकाः हृष्टोजातः क्रुद्धोजातइति ८ तमात्मानमोमित्येवोंकारालंबनाः संतोयथोक्तकल्पन

याध्यायथचिन्तयततेषां कल्पनार्थमाशीर्वचनंभगवती करुणानिधिर्वदतिस्वस्तिनिर्विघ्नमस्तुवोयुष्मा कंपाराषपरकूलप्राप्तये तमसोऽविघातः परस्तादविचार हितब्रह्मात्मस्वरूपग मनायेत्यर्थःसआत्माक वर्ततेतत्राह यःसर्वज्ञोयश्चसर्वविद्यस्यैषमहिमाविभूतिर्जगत्सर्जनादि रूपोभुविप्रसिद्धः सदिव्येद्योत नवतिब्रह्मपुरेहृदये पुण्डरीकेतत्रतस्यप्रकाशमानत्वात् तस्मिन्हृत्कमले यत्व्योमाकाशस्तस्मिन्प्र तिष्ठितइवोपलभ्यते ६ सह्यात्मामनोवृत्तिभिरेव विभाव्यत इतिमनोमयः प्राणश्चशरीरंचतयोरय

तमसःपरस्तात् । दिव्येब्रह्मपुरेव्योम्निआत्मासंप्रतिष्ठितः ९ मनोमयःप्राणशरीरने ताप्रतिष्ठितोन्नेहृदयंसन्निधाय । तद्विज्ञानेनपरिपश्यन्तिधीरा आनन्दरूपममृतंयद्वि भाति १० भिद्यतेहृदयग्रंथिश्छिद्यंतेसर्वसंशयाः । क्षीयन्तेचास्यकर्माणितस्मिन्दृष्टे परावरे ११ हिरण्मयेपरेकोशेविरजंब्रह्मनिष्कलम् । तच्छुभ्रंज्यातिषांज्योतिस्तद्यदात्म

नेताशरीराच्छरीरांतरं प्रतिप्रतिष्ठितोवस्थितोन्नेपरिणामेपिंडेहृदये बुद्धिंसन्निधायसमवस्थाप्यतद्वि ज्ञानेनतत्साक्षात्कारेण परिपश्यंति सर्वतः पूर्णपश्यंतिधीराविवेकिनः आनंदरूपंदुःखासंस्पष्टमसृतं यद्विभातिसर्वदा १० अस्मात्माज्ञानस्यफलमभिधीयते विद्यतेइतिहृदयग्रंथिः चिदहंकारतादात्म्यरू पोभिद्यतेनश्यतिछिद्यंतेसर्वज्ञेय विपयाः संशयाःसर्वेषांमिथ्यात्वनिश्चयात् क्षियंतेनश्यन्ति चकर्माणि प्रारब्धानिरिक्तानिसर्वाणि तस्मिन्परमात्मानिदृष्टे साक्षात्कृतेइत्यर्थः ११ उक्तस्यैवार्थस्यसंक्षेपाभि धायकाउत्तरेत्रयोपिमंत्राः हिरण्मयेज्योतिर्मये परेकोशेआनन्दमयेकोशे विरजंउपलक्षणतया गुणत्रपर

हितंब्रह्मपुच्छं प्रतिष्ठेतिश्रुत्युक्तं ब्रह्मनिष्कलंमायारहितमसत्वमरजस्कमतमस्कममायमितिश्रुत्यंतरा त्रअतएवशुभ्रंस्वच्छंज्योतिषांसर्वप्रकाशकसूर्यादीनामपिज्योतिःप्रकाशकमित्यर्थः यदात्मविदोज्ञानिना महतायासेन विदुस्तद्धिरण्मयेपरेकोशेतिष्ठतीत्यन्वयः १२ कथंज्योतिषांज्योतिस्तदुच्यते नतत्रेति तत्रतस्मिन्नात्मभूतेब्रह्मणिनसूर्योभाति सूर्योपितद्ब्रह्मनप्रकाशयतीत्यर्थःतथाचंद्रतारकंचन्द्रमा विद्युतोपि नभांतिनप्रकाशयन्तिकुतोयमग्निःपूर्वापेक्षयास्वल्पज्योतिःप्रकाशयतिनैवप्रकाशयतीत्यर्थः किंबहुनायदिदं

विदोविदुः १२ नतत्रसूर्योभातिनचन्द्रतारकंनेमाविद्युतोभान्तिकुतोयमग्निः । तमेव भान्तमनुभातिसर्वंतस्यभासासर्वमिदंविभाति १३ ब्रह्मैवेदममृतंपुरस्ताद्ब्रह्मपश्चाद्ब्रह्मदक्षिणतश्चोत्तरेण । अधश्चोर्ध्वंचप्रसितंब्रह्मैवेदंविश्वंवरिष्ठं १४ एतादृगनुभावोयस्यसकृतार्थोनरोत्तमः । ब्रह्मभूतःप्रसन्नात्मानशोचतिनकाङ्क्षति १५ द्वि

जगद्भातितत्तमेवात्मानंस्वप्रकाशत्वाद्भांतं प्रकाशितमनुभात्यनु दीप्यतेतस्यैवभासासर्वमिदं सूर्यादिजगद्वि भातीत्यर्थः १३ यन्मयोक्तं ब्रह्मतदेवसत्यंरज्जुस्थानीयं नान्यज्जगत्सर्पस्थानीयंमृषात्वात्तस्मादिदमे वाश्रयणीयंइत्याभिप्रायेणनिगमनस्थानीयेन मंत्रेणोपसंहरति ब्रह्मैवेदमितिब्रह्मैवोक्त लक्षणमिदंयत्पुर स्तादग्रेब्रह्मैवाविद्यादृष्टीनां प्रत्यवभासमानंतथापश्चाद्ब्रह्मतथादक्षिणतश्चतथोत्तरेणतथैवाधस्तादूर्ध्वंच किंबहुनाब्रह्मैवेदंविश्वंसमस्तंवरिष्ठमिदं जगत् अब्रह्मप्रत्ययः सर्वोऽविद्यामात्रोरज्ज्वामिवसर्पप्रत्ययो ब्रह्मैवेदंपरमार्थसत्वमिति वेदानुशासनमित्यर्थः १४ एतादृशानुभववतः कृतार्थत्वमाह एतादृगिति १५

द्वितीयादितितदभावाद द्वितीयस्यभयकारणस्याभावात् ब्रह्मविन्नबिभेतीत्यर्थः तेनस्वमकदापिवि
योगोनास्तीत्याह नतद्वियोगइति १६ अहमेवेति अहंयास्मिसासज्ञानस्तीत्यर्थः सज्ञानीयोस्तिसअहमे
वास्मीत्यर्थः व्यतिहारेणदृढाभेदोदर्शितः १७ अहंज्ञानिहृदयेएवतिष्ठामीत्याहनाहंतीर्थेति १८ कृतकृ

तीयाद्भयंराजन्तदभावाद्विभेतिन । नतद्वियोगोस्त्यस्तिमद्वियोगोपितस्यन १६
अहमेवससोहंवैनिश्चितंविद्धिपर्वत । मद्दर्शनन्तुतत्रस्याद्यत्रज्ञानीस्थितोमम १७
नाहंतीर्थेनकैलासेवैकुण्ठेवानकर्हिचित् । वसामिकिन्तुमज्ज्ञानीहृदयांभोजमध्यमे
१८ मत्पूजाकोटिफलदंसकृन्मज्ज्ञानिनोर्च्चनं । कुलंपवित्रंतस्यास्तिजननीकृतकृ
त्यका १९ विश्वंभरापुण्यवतीचिल्लयोयस्यचेतसः । ब्रह्मज्ञानंतुयत्पृष्टंत्वयापर्व
तसत्तम २० कथितंतन्मयासर्वंनातोवक्तव्यमस्तिहि । इदंज्येष्ठायपुत्रायभक्तियु
क्तायशीलिने २१ शिष्यायचयथोक्तायवक्तव्यंनान्यथाक्वचित् । यस्यदेवेपराभ
क्तिर्यथादेवेतथागुरौ २२ तस्यैतेकथिताह्यर्थाःप्रकाशंतेमहात्मनः । येनोपदिष्टा

त्यकास्वार्थेकन्प्रत्ययः १६ यस्यपुरुषस्यचेतसश्चितिपरमात्मनिलयोजातस्तेनपुरुषेण विश्वंभराप्र
थ्वीपुण्यवतीत्यर्थः २० नातोवक्तव्यमस्तीति इतःपरमधिको वक्तव्यांशोनास्तीत्यर्थः विद्योपदेशयात्र
मुपदिशतिइदंज्येष्ठायेति २१ यथोक्तायशास्त्रोक्तलक्षणयुक्ताय गुरुप्रसादं विनापरमेश्वरप्रसादं विना ६०

कदापिब्रह्मविद्यानभवतीत्याह यस्यदेवेइतिश्रुतिरियं २२ विद्येयमितिब्रह्मविद्येत्यर्थः सुकृतमुपकारं तस्यगुरोः कर्त्तुमयं शिष्योयतोसमर्थस्ततोयं शिष्यस्तस्यगुरोर्यावज्जीवपर्यन्तंऋणीत्यर्थः २३ ब्रह्मजन्मब्रह्मरूपेणजन्म पितृजातंजन्ममरणेसतिनष्टंभवेन्नेत्थं ब्रह्मरूपेणजातंकदाचिदपिनष्टंभवेततइत्यर्थः २४ अतएवतस्मै नद्रुह्येत्कृतमस्यजानन्निति श्रुतिरपिइममेवार्थं वक्तीत्याहतस्मै नद्रुह्येदिति २५ ।

विद्येयंसएवपरमेश्वरः २३ तस्यायंसुकृतंकर्त्तुमसमर्थस्ततोऋणी । पित्रोरप्यधिकःप्रोक्तोब्रह्मजन्मप्रदायकः २४ पितृतोजन्मनष्टंस्यान्नेत्थंजातंकदाचन । तस्मै नद्रुह्येदित्यादिनिगमोप्यवदन्नग २५ तस्माच्छास्त्रस्यसिद्धान्तोब्रह्मदातागुरुःपरः । शिवरुष्टेगुरुस्त्राताग़ुरौरुष्टेनशंकरः २६ तस्मात्सर्वप्रयत्नेनश्रीगुरुंतोषयेन्नग । कायेनमनसावाचासर्वदातत्परोभवेत् २७ अन्यथातुकृतघ्नःस्यात्कृतघ्नेनास्तिनिष्कृतिः । इन्द्रेणाथर्वणायोक्ताशिरश्छेदप्रतिज्ञया २८ अश्विभ्यांकथनेतस्याशि

२६ कृतघ्नेनास्तिनिःकृति रतिकृतघ्नेप्रायश्चित्तं नास्तीत्यर्थः २७ इन्द्रेणाथर्वणायोक्तेति अत्रेदंबोध्यं दध्यङ्नामाथर्वणोमुनिः सइन्द्रंप्रतिब्रह्मविद्यांप्रार्थितवांतस्माइन्द्रोब्रह्मविद्यां प्रोवाचानंतरमुक्तवानिन्द्रोयदीयं ब्रह्मविद्यान्यस्मैवदासितदैवते शिरश्छेत्स्यामीति ततः क्रियताकालेनदध्यंचं मुनिंप्रत्यागत्याश्विनीकुमारौ ब्रह्मविद्यां प्रार्थितवंतौ ताभ्यां मुनिरुवाच यद्यहं ब्रह्मविद्यांवक्ष्यामि तर्हींद्रोमे शिरश्छे

स्यतीति तच्छुत्वातौ वैद्यावूचतुस्तवेदं शिर: छित्वास्माभिरन्यत्रस्थाप्यते अश्वीयंमस्तकं तवदेहे संयो
ज्यते तेन ब्रह्मविद्यामस्मभ्यमुपादिश यदा इन्द्र आगत्यतच्छिरश्छेत्स्याति तदा वयं पूर्वं स्थापितं मुख्यं
शिरस्तवदेहे संयोजयावस्तदनंतरं मुख्य मुखेनैव मुख्य शिरसा ब्रह्मविद्यां वां वदेति तदनंतरं समुनिरपि

शःछिन्नंचवज्रिणा । अश्वीयंतच्छिरोनष्टंदृष्ट्वावैद्यौसुरोत्तमौ २९ पुनःसंयोजितं
स्वीयंताभ्यांमुनिशिरस्तदा । इतिसंकटसंपाद्याब्रह्मविद्यानगाधिप ३० लब्धाये
नसधन्यःस्यात्कृतकृत्यश्चभूधरः ॥

इतिश्रीदेवीभागवतेमहापुराणेसप्तमस्कंधेदेवीगीतायांषट्त्रिंशोऽध्यायः ३६

हिमालयउवाच ॥ स्वीयांभक्तिंवदस्वांबयेनज्ञानंसुखेनहि ॥ जायेतमनुजस्यास्यम
ध्यमस्यविरागिणः १ श्रीदेव्युवाच ॥ मार्गास्त्रयोमेविख्यातामोक्षप्राप्तौनगाधिप ।

तथैव चकारेति कथा सर्ववेदेषु प्रसिद्धातां कथा ब्रह्मविद्यां स्तोतुं स्मारयाति इन्द्रेणाथर्वणायोक्तेति २८
२९ इति संकटेति एतादृश्याऽतिदुर्लभा ब्रह्मविद्याये न लब्धासधन्य इति अन्वयः ३०॥

इतिश्रीदेवीभागवतेतिलकेसप्तमस्कंधे देवीगीतायांषट्त्रिंशोऽध्यायः ३६ ॥

पंचाधिकैश्चचत्वारिंशत्पद्यैरथचसादरम्।भक्तिस्वरूपमहिमायथावदनुवर्ण्यते॥पूर्वंयस्यदेवे पराभक्ति रि
त्युक्तं तत्र भक्तिस्वरूपं पृच्छति स्वीयांभक्तिमिति मध्यमस्यमध्यमाधिकारिणो भक्तिरहितस्यापि दुर्लभं

ज्ञानं येनभक्तिहेतुना जायेत तांभक्तिं वदेत्यर्थः १ मोक्षप्राप्तौ त्रयोमार्गाः कर्मोपासना ज्ञानभेदेनात्रिविधाः तत्रज्ञानमार्गः साक्षान्मोक्षसाधनमितरौ चित्तशुद्धि द्वारेतिविवेकः तानेवमार्गान् दर्शयति कर्मयोग इति भक्तियोग उपासनायोग इत्यर्थः २ त्रयाणामपि मार्गाणांतन्मार्गगामिनां त्रयाणामपि पुरुषाणामयं भक्तियोगः कर्त्तुंयोग्यः शक्यश्चभवति कुतइति चेदस्यभक्तियोगस्यान्यापेक्षयासुलभत्वान्मानसत्वा द्रव्यव्यय

कर्मयोगोज्ञानयोगोभक्तियोगश्चसत्तम २ त्रयाणामप्ययंयोग्यः कर्त्तुंशक्योस्तिसर्वथा । सुलभत्वान्मानसत्वात्कायचित्ताद्यपीडनात् ३ गुणभेदान्मनुष्याणांसाभक्तिस्त्रिविधामता । परपीडांसमुद्दिश्यदंभंकृत्वापुरःसरं ४ मात्सर्यक्रोधयुक्तोयस्तस्यभक्तिस्तुतामसी । परपीडादिरहितःस्वकल्याणार्थमेवच ५ नित्यंसकामहृदयोयशोर्थीभोगलोलुपः । तत्तत्फलसमावाप्त्यैमामुपास्तेतिभक्तितः ६ भेदबुद्ध्यातुमांस्वस्मादन्यंजानातिपामरः । तस्यभक्तिःसमाख्यातानगाधिपतुराजसी ७ परमेशा

शरीरायासमंतरेण केवलं मनोवृत्त्यैवसंपाद्यत्वात् यस्मिन्भक्तियोगे कायचित्त द्रव्यव्ययादि पीडनाभावो भवति तस्मादित्यर्थः तस्मात्सर्वैरप्ययं भक्तियोगो नियमेनाश्रयितव्य इत्यर्थः ३ तत्रभक्तेस्त्रैविध्यमुपदिशति गुणभेदादिति मनुष्याणां मनुष्यसंबंधिनां गुणानांसत्त्वरजस्तमोरूपाणां भेदाद्भक्तिरपि त्रिविधा सात्विक राजस तामसभेदेन त्रिविधाभवतीत्यर्थः त्रिविधभक्तिस्वरूपमाह परपीडामिति अन्यनाशार्थ मित्यर्थः ४।५ भेदबुद्ध्याजीवेश्वरयोर्भेदबुद्ध्या मां सर्वेश्वरीं स्वस्मादन्यां भिन्नांजानाति यतः पामरः ६।७

भेदवुद्धिमुपाश्रित इति अयमपि सात्विकः पुरुषोभेद वुद्धिं जीवेश्वरयोः पृथक्त वुद्धिमाश्रित्यैव भक्तिं क
रोतीत्यर्थः ८। ६ त्रिविधभक्ति स्वरूपमुपदिश्य तिसृणां भक्तीनां मध्ये द्वयोर्हेयत्व मेकस्याग्राह्यत्वमाह पर
भक्तेरिति सापरानुरक्तिरीश्वर इति लक्षणलक्षितायाः परभक्तेः परप्रेमरूपाया इयं सात्विकीभक्तिः प्रा
पिका भवति तत इयमाश्रयणीयेतिभावः नन्वियं परभक्तिः कुतोनेति चेत्तत्राह भेदवुध्यवलंबनादिति

र्पणंकर्मपापसंक्षालनायच ॥ वेदोक्तत्वादवश्यंतत्कर्त्तव्यंतुमयानिशं ८ इतिनि
श्चित्तबुद्धिस्तुभेदवुद्धिमुपाश्रितः ॥ करोतिप्रीतयेकर्मभक्तिःसानगसात्विकी ९ पर
भक्तेःप्रापिकेयंभेदबुद्ध्यवलंबनात् ॥ पूर्वप्रोक्तेह्यमेभक्तीनपरप्रापिकेमते १० अधु
नापरभक्तिंतुप्रोच्यमानांनिबोधमे ॥ मद्गुणश्रवणंनित्यंममनामानुकीर्त्तनं ११ क
ल्याणगुणरत्नानामाकरायांमयिस्थिरं ॥ चेतसोवर्त्तनंचैवतैलधारासमंसदा १२ हे
तुस्तुतत्रकोवापिनकदाचिद्भवेदपि ॥ सामीप्यसार्ष्टिसायुज्यसालोक्यानांनचेषणा १३

अस्यां भेदवुद्धिर्वर्तत इत्यात्मसदृश प्रेम्णोत्रा संभवान्नेयं परभक्तिरित्यर्थः परप्रेमत्वात्मन्येव संभवति
तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयः सर्वस्माद्यदंतरमित्यादि श्रुतिभ्यः पूर्वप्रोक्ते इति पूर्वप्रोक्ते द्वेभक्तीतु
न परभक्ति प्रापिके ततस्ते उभे अपित्याज्ये इत्यर्थः परभक्तिस्वरूपमाह अधुनेति१०।११तैलधारा यथा व्यु
च्छिन्नान भवति तद्वदिदमपि चेतो ध्यानमध्ये विषयेषु नगच्छतीत्यर्थः १२ हेतुरिति एतादृशध्यानेहेतुः फ
लंकोवापि कोपि कदाचिदपिनैव भवेत्किंतु केवलंमत्प्रीत्यर्थं मयि परमानुरागेनैव चेतसोनुवर्त्तनं करो

तीत्यर्थः सामीप्यादि लोकेच्छयापिन मदाराधनं करोति किन्तु प्रेम्णैवेत्याह सामीप्येति १३ सेव्य सेव कतेति क्यप्लोपे पंचमी सेव्य सेवकभावं विहायेत्यर्थः मदाराधनमेवेच्छति न मोक्षमित्यर्थः १४

मत्सेवातोधिकंकिंचिन्नैवजानातिकर्हिचित् । सेव्यसेवकताभावा त्तत्रमोक्षंनवां छति १४ परानुरक्त्यामामेवचिंतयेद्योह्यतंद्रितः । स्वाभेदेनैवमांनित्यंजानातिन विभेदतः १५ मद्रूपत्वेनजीवानांचिंतनंकुरुतेतुयः ॥ यथास्वस्यात्मनिप्रीतिस्तथै वचपरात्मनि १६ चैतन्यस्यसमानत्वान्नभेदंकुरुतेतुयः । सर्वत्रवर्त्तमानांमांसर्व रूपांचसर्वदा १७ नमतेयजतेचैवाप्याचांडालांतमीश्वरम् । नकुत्रापिद्रोहबुद्धिंकुरु तेभेदवर्जनात् १८ मत्स्थानदर्शनेश्रद्धामद्भक्तदर्शनेतथा । मच्छास्त्रश्रवणेश्रद्धा मंत्रतंत्रादिषुप्रभो १९ मयिप्रेमाकुलमतीरोमांचिततनुःसदा । प्रेमाश्रुजलपूर्णाक्षः कंठगद्गदनिस्वनः २० अनन्येनैवभावेनपूजयेद्योनगाधिप । मामीश्वरींजगद्योनिं सर्वकारणकारणम् २१ दानानिममदिव्यानिनित्यनैमित्तिकान्यपि । नित्यंयःकुरु

स्वाभेदेनैवेति अहमेव सच्चिदानन्दरूपिणी भगवत्यस्मीति भावयेत्यर्थः १५ । १६ । १७ ईश्वरं हे पर्वत राज भेदवर्जनात् सर्वत्र चैतन्यरूपैक भागमस्तिन द्वितीयेति भेदनिराशादित्यर्थः १८ । १९ मत्स्थानेति तानिच वक्ष्यमाणानि पूर्वोक्तानिच स्थानानि मच्छास्त्रं शक्तिदर्शनं तथा देवीभागवतं वेदांतंच २० । २१

व्रतानीति तानि वक्ष्यमाणानि २२ मदुत्सवेति तेचोत्सवाव्यक्ष्यमाणाः अन्यकृतोत्सवदर्शनेच्छाचेत्यर्थः स्व
तोपि मदुत्सवकृतिर्मदुत्सव करणमित्यर्थः २३। २४ प्रारब्धेनेति प्रारब्धाधीनं सर्वंज्ञात्वा कामपि भत्स्व
रूपचिंतातिरिक्तां चिंतां न करोतीत्यर्थः २५। २६ इत्थं परमभक्त्या स्वस्वरूपे चित्लययोग्यता भवती

तेभक्त्यावित्तशाठ्यविवर्जितः २२ मदुत्सवदिदृक्षाचमदुत्सवकृतिस्तथा । जायते
यस्यनियतंस्वभावादिवभूधर २३ उच्चैर्गायंश्चनामानि ममैवखलुनृत्यति । अ
हंकारादिरहितोदेहतादात्म्यवर्जितः २४ प्रारब्धेनयथायच्चक्रियतेतत्तथाभवेत् ।
नमेचिंतास्तितत्रापिदेहसंरक्षणादिषु २५ इतिभक्तिस्तुयाप्रोक्ता परभक्तिस्तुसास्मृ
ता । यस्यांदेव्यतिरिक्तंतु नकिंचिदपिभाव्यते २६ इत्थंजातापराभक्तिर्यस्यभूध
रतत्त्वतः । तदैवतस्यचिन्मात्रेमद्रूपेविलयोभवेत् २७ इत्थंजातापराभक्तिर्यस्यभूध
रतत्त्वतः । तदैवतस्यचिन्मात्रेज्ञानेतदुभयंयतः २८ भक्तौकृतायांयस्यापिप्रारब्ध
वशतोनग । नजायतेममज्ञानंमणिद्वीपंसगच्छति २९ तत्रगत्वाखिलान्भोगान
निच्छन्नपिचच्छति । तदंतेममचिद्रूपज्ञानंसम्यग्भवेन्नग ३० तेनमुक्तःसदैवस्या

त्सिध्यतस्तस्माद्भक्तेर्वैराग्यस्यच
स्याह तदैवेति २७ भक्ताविति यतो ज्ञानेसति भक्तिवैराग्ये सांगे संपूर्णे सिध्यतस्तस्माद्भक्तेर्वैराग्यस्यच
पापराधाज्ञानमित्यर्थः तदुक्तं विष्णुभागवते भक्तिः परेशानुभवो विरक्तिरन्यत्रचैव त्रिक एककाल इति २८

मणिद्वीपपूर्वोक्तं द्वादशस्कंधे वक्ष्यमाणंच २९ ऋच्छति प्राप्नोतीत्यर्थः ३०।३१ संवित्परतनोरिति प्रत्यगात्मविशेषणं तस्य प्राणोति नतस्य प्राणाउत्क्रामंतीतिश्रुतेः ३२ कंठचामीकरेति यथा कंठगतं विद्यमानमेवचामीकरं सुवर्णमज्ञानेन तिरोभूतं ज्ञानेनाज्ञाननाशेसति तदेव प्राप्यते तदेव विद्यमानमेवात्मरूपमज्ञानेन तिरोभूतं पश्चाज्ज्ञानेनाज्ञाननाशेसति तदेव प्राप्यते नान्यदित्यर्थः ३३ विदिताविदितादिति

तज्ज्ञानान्मुक्तिर्नचान्यथा ॥ इहैवयस्यज्ञानंस्याद्धृत्प्रत्यगात्मनः ३१ ममसंवि
त्परतनोस्तस्यप्राणाव्रजंतिन । ब्रह्मैवसंस्तदाप्नोति ब्रह्मैवब्रह्मवेदयः ३२ कंठचा
मीकरसममज्ञानात्तुतिरोहितम् । ज्ञानादज्ञाननाशेनलब्धमेवहिलभ्यते ३३ वि
दिताविदितादन्यन्नगोत्तममवपुर्मम । यथादर्शेतथात्मनियथाजलेतथापितृलोके ३४
छायातपौयथास्वच्छौविविक्तौतद्वदेवहि । ममलोकेभवेज्ज्ञानंद्वैतभानविवर्जितम् ३५
यस्तुवैराग्यवानेवज्ञानहीनोम्रियेतचेत् । ब्रह्मलोकेवसेन्नित्यंयावत्कल्पंततःपरं ३६
शुचीनांश्रीमतांगेहेभवेत्तस्यजनिःपुनः । करोतिसाधनंपश्चात्ततोज्ञानंहिजायते ३७

विदितं कार्यं घटादिरूपं विदितं कारणं मायारूपं तस्मादन्यदित्यर्थः तथाचश्रुतिः अन्यदेवतद्विदितादथो अविदितादधीति एतदर्थस्तुमत्कृते केनोपनिषद्भाष्ये व्याख्यानेद्रष्टव्यः यथादर्शे प्रतिबिंबंपतति तद्वदात्मन्यस्मिन्देहेनुभवो भवतीत्यर्थः यथाजले प्रतिबिंबं पूर्वापेक्षया विविक्तं तथा पितृलोकेनुभवोस

वतीत्यर्थः ३४ ममलोके माणिद्वीपेच्छाया तपयोरिवात्यंत विविक्तानुभव इत्यर्थः ३५ । ३६ । ३७ । ३८
नोचेन्महान्विनाशइति तथाचश्रुतिः इहचेदवेदीदथ सत्यमस्ति नचेदिहा वेदीन्महती विनष्टिरिति प्रथ

अनेकजन्मभोराजन् ज्ञानंस्यान्नैकजन्मना। ततःसर्वप्रयत्नेनज्ञानार्थंयत्नमाश्रयेत् ३८
नोचेन्महान्विनाशःस्याज्जन्मैतद्दुर्लभंपुनः । तत्रापिप्रथमेवर्णेवेदप्राप्तिश्चदुर्लभा ३९
शमादिषट्कसंपत्तिर्योगसिद्धिस्तथैवच । तथोत्तमगुरुप्राप्तिःसर्वमेवात्रदुर्लभम् ४०
तथेन्द्रियाणांपटुतासंस्कृतत्वंतनोस्तथा । अनेकजन्मपुण्यैस्तुमोक्षेच्छाजायतेततः
४१ साधनेसकलेप्येवंजायमानेपियोनरः । ज्ञानार्थंनैवयततेतस्यजन्मनिरर्थकम् ४२
तस्माद्राजन्यथाशक्त्याज्ञानार्थंयत्नमाश्रयेत् । पदेपदेश्वमेधस्यफलमाप्नोतिनिश्चि
तम् ४३ घृतमिवपयसिनिगूढंभूतेभूतेचवसतिविज्ञानं । सततंमंथयितव्यंमनसा
मंथानभूतेन ४४ ज्ञानंलब्ध्वाकृतार्थःस्यादितिवेदान्तडिंडिमः । सर्वमुक्तंसमासेन
किंभूयःश्रोतुमिच्छसि ४५ ॥

इतिश्रीदेवीगीतायांसप्तत्रिंशोऽध्यायः ३७ ॥

मेवर्णे ब्राह्मणवर्णे तत्रापि जन्मदुर्लभं तत्रापि वेदप्राप्तिर्दुर्लभा ३९ । ४० संस्कृतत्वं वेदोक्त संस्कार सं
स्कृतत्वं ४१ । ४२ श्रवणादिषु प्रवृत्तस्य क्षणेश्वमेधफलं भवतीत्याह पदे पदे इति क्षणे क्षणे इत्यर्थः ४३ 

उपदेशसारं भगवतीवदाति घृतमिवेति पयसिदुग्धे घृतमिवभूते भूतेसर्वदेहेष्वित्यर्थः विज्ञानं ब्रह्मवसाति तिरोहितं तन्मनसा मंथन भूतेन मंथयितव्यं मंथनेन पयः सकाशात् घृतमिव पृथक्कुर्यादित्यर्थः इयम पि श्रुतिरेव कंठरवेणोयात्ता ४४ उपसंहरति सर्वमुक्तमिति ४५ ॥

इतिश्रीदेवीभागवततिलकसप्तमस्कंधे देवीगितायांसप्तत्रिंशोऽध्यायः ३७ ॥

हिमालयउवाच ॥ कतिस्थानानिदेवेशिद्रष्टव्यानिमहीतले । मुख्यानिचपवित्रा
णिदेवीप्रियतमानिच १ व्रतान्यपितथायानितुष्टिदान्युत्सवाश्चपि । तत्सर्वंवद
मेमातः कृतकृत्योयतोनरः २ श्रीदेव्युवाच ॥ सर्वंदृश्यंममस्थानंसर्वेकालाव्रतात्मकाः ।
उत्सवाःसर्वकालेषुयतोहंसर्वरूपिणी ३ तथापिभक्तवात्सल्यात्किंचित्किंचिदथोच्य
ते । शृणुष्वावहितोभूत्वानगराजवचोमम ४ कोलापुरंमहास्थानंयत्रलक्ष्मीःस

पंचाशद्भिरथाधीनैः पद्यैरत्रमहोत्सवाः । व्रतानिदेव्याःस्थानानि कीर्त्यंतेसंग्रहेणतु ॥ पूर्वंमत्स्थानदर्शने श्रद्धेत्युक्तं तथा व्रतानिमम दिव्यानीत्युक्तं तथा मदुत्सव दिदृक्षाच मदुत्सव कृतिस्तथेत्युक्तं तत्रतानि कानिस्थानानि व्रतानिच कानि केते उत्सवा इत्येतत्सर्वं पृच्छति कतिस्थानानीति १ । २ यस्मादहं सर्व रूपिणी तस्मात्सर्वं दृश्यमात्रं ममसंविद्रूपिण्याः सर्वाधिष्ठानभूतायाः स्थानं सर्वस्यमपि कल्पितत्वात् तथापि सर्वेपि कालाव्रतात्मकाः यस्मिन्काले यत्क्रियते मत्प्रीत्यर्थं तत्सर्वं मम व्रतमेव ममसर्वकाला

त्मकत्वात् तथा उत्सवाश्रपीत्यर्थः ३ । ४ कोलापुरं दक्षिणदेशे मातापुरं सह्याद्रि पर्वते ५ । ६ । ७ । ८
चन्द्रलानामदेवी कर्णाटदेशे वर्त्तते ९ । १० चिदंबरेहालस्य स्थाने ११ एकाम्बरंस्थानं भुवनेश्वर इति

दास्थिता । मातापुरंद्वितीयंचरेणुकाधिष्ठितंपरम् ५ तुलजापुरंतृतीयंस्यात्सप्तशृं
गंतथैवच । हिंगुलायांमहास्थानंज्वालामुख्यास्तथैवच ६ शाकंभर्याःपरंस्थानंभ्र
मर्याःस्थानमुत्तमम् । श्रीरक्तदन्तिकास्थानंदुर्गास्थानंतथैवच ७ विंध्याचलनिवा
सिन्याःस्थानंसर्वोत्तमोत्तमम् । अन्नपूर्णामहास्थानंकाञ्चीपुरमनुत्तमम् ८ भीमादेव्याः
परंस्थानंनीलपर्वतमस्तके । जाम्बूनदेश्वरीस्थानंकौशिकीस्थानमेवच ९ नीलांबायाः
परंस्थानंनीलपर्वतमस्तके । जाम्बूनदेश्वरीस्थानंतथाश्रीनगरंशुभम् १० गुह्यकाल्या
महास्थानंनेपालेयत्प्रतिष्ठितम् । मीनाक्ष्याःपरमंस्थानंयच्चप्रोक्तंचिदंबरे ११ वेदारण्यं
महास्थानंसुन्दर्याःसमधिष्ठितम् । एकांबरमहास्थानंपरशक्त्याःप्रतिष्ठितम् १२
महालसापरंस्थानंयोगेश्वर्यास्तथैवच । तथानीलसरस्वत्याःस्थानंचीनेषुविश्रुतम् १३
वैद्यनाथेतुवगलास्थानंसर्वोत्तमोत्तमम् । श्रीमच्छ्रीभुवनेश्वर्यामणिद्वीपममस्मृतम् १४

नाम्नापुरुषोत्तम क्षेत्रसन्निधौ वर्त्तते परशक्त्याभुवनेश्वर्या प्रतिष्ठितं तत्स्थानं तस्मिन्स्थानेपि भुवनेश्व
र्यहन्तिष्ठामीत्यर्थः १२ महालसास्थानं दक्षिणदेशे मल्लारि स्थानमिति प्रसिद्धं तदस्ति योगेश्वरी

वराद्देशोस्ति चीनेषु चीनदेशेषु १३ मणिद्वीपं तृतीयस्कंधे वर्णितं भुवनेश्वर्या स्मृतामित्यर्थः १४ कामाख्यायाः महादेव्याः सतीदेहेनावतीर्णायायोनिमंडलं यत्रपतितंकामरूदेशे कालिकापुराणेयस्यमहत् वर्णनंतत्कामाख्यायोनिमंडलांत्रिपुरभैरव्याः स्थानमित्यर्थः तस्यमाहिमानंवर्णयति भूमंडलइति १५ रजस्व

श्रीमत्त्रिपुरभैरव्याःकामाख्यायोनिमण्डलम्। भूमण्डलेक्षेत्ररत्नं महामायाधिवासितम्
१५ नातःपरतरंस्थानं क्वचिदस्तिधरातले। प्रतिमासंभवेद्देवी यत्रसाक्षाद्रजस्वला
१६ तत्रत्यादेवताःसर्वाःपर्वतात्मकतांगताः। पर्वतेषुवसंत्येवमहत्योदेवताअपि १७
तत्रत्यापृथिवीसर्वा देवीरूपास्मृताबुधैः। नातःपरतरंस्थानं कामाख्यायोनिमण्डला
त् १८ गायत्र्याश्चापरंस्थानंश्रीमत्पुष्करमीरितम्। अमरेशेचण्डिकास्यात्प्रभासेपु
ष्करेक्षिणी १९ नैमिषेतुमहास्थाने देवीसालिङ्गधारिणी। पुरहूतापुष्कराक्षे आषाढौ
चरतिस्तथा २० चण्डमुण्डीमहास्थाने दण्डिनीपरमेश्वरी। भारभूतौभवेद्भूतिर्ना
कुलेनकुलेश्वरी २१ चन्द्रिकातुहरिश्चन्द्रे श्रीगिरौशांकरीस्मृता। जप्येश्वरेत्रिशूला
स्यात् सूक्ष्माचाम्रातकेश्वरे २२ शांकरीतुमहाकाले सर्वाणामध्यमाभिधे। केदारा
ख्येमहाक्षेत्रे देवीसामार्गदायिनी २३ भैरवाख्येभैरवीसागयायांमंगलास्मृता। स्था

लारजोवतीएतादृशंतज्जागरितंस्थानामित्यर्थः १६ पर्वतात्मकतांगताइति कालिकापुराणे सर्वमेतत्स्पष्टं १७। १८। १९। २०। २१। २२ महाकालेउज्जयिन्यामध्यमाभिधे मध्यमेश्वरस्थानइत्यर्थः २३।

नाकुलेस्थाने स्वायंभुवीदेवीवर्त्ततइत्यर्थः २४ । २५ । २६ । २७ छगलंडकेइदस्थानंदक्षिणदेशे समुद्र

णुप्रियाकुरुक्षेत्रे स्वायंभूव्यापिनाकुले २४ कनखलेभवेदुग्रा विश्वेशाविमलेश्वरे ।
अट्टहासेमहानन्दा महेन्द्रेतुमहान्तका २५ भीमेभीमेश्वरीप्रोक्तास्थानेवस्त्रापथेपुनः ।
भवानीशंकरीप्रोक्तारुद्राणीत्वर्धकोटिके २६ अविमुक्तेविशालाक्षीमहाभागामहाल
ये । गोकर्णेभद्रकर्णीस्यात् भद्रास्याद्भद्रकर्णके २७ उत्पलाक्षीसुवर्णाक्षेस्थाएवीशा
स्थाणुसंज्ञके । कमलालयेतुकमलाप्रचण्डाछगलंडके २८ कुरण्डकेत्रिसन्ध्यास्यान्मा
कोटेमुकुटेश्वरी । मण्डलेशेशांडकीस्यात्कालीकालंजरेपुनः २९ शंकुकर्णेध्वनिः
प्रोक्तास्थूलास्यात्स्थूलकेश्वरे । ज्ञानिनांहृदयांभोजेहृल्लेखापरमेश्वरी ३० प्रोक्ता
नीमानिस्थानानिदेव्याःप्रियतमानिच । तत्तत्क्षेत्रस्यमाहात्म्यंश्रुत्वापूर्वंनगोत्तम ३१
तदुक्तेनविधानेनपश्चाद्देवींप्रपूजयेत् । अथवासर्वक्षेत्राणिकाश्यांसंतिनगोत्तम ३२
तत्रनित्यंवसेन्नित्यंदेवीभक्तिपरायणः । तानिस्थानानिसंपश्यन्जपन्देवींनिरंतरम्
३३ ध्यायंस्तच्चरणांभोजंमुक्तोभवतिबंधनात् । इमानिदेवीनामानिप्रातरुत्थाययः

सन्निधौतिष्ठति २८ । २९ हृल्लेखापदव्युत्पत्तिर्यामलेभुवनेश्वरीरहस्ये हृदिलेखेवजागर्तिप्राणशक्तिरियं

पराहृच्छेरवाकथ्यते तस्मादिति ३० । ३१ । ३२ । ३३ । ३४ ३५ । ३६ व्रतमनंततृतीयाख्यमिति इमानिवृ
तीयाव्रतानिमत्स्यपुराणे प्रसिद्धानितद्विधिश्चतत्रैवोक्तः ३७ । ३८ यत्रप्रदोषकाले ३९ निशामुखेरजनी

पठेत् ३४ भस्मीभवन्तिपापानितत्क्षणाञ्नगसत्वरम् । श्राद्धकालेपठेदेतान्यमलानि
द्विजाग्रतः ३५ मुक्तास्तत्पितरःसर्वेप्रयान्तिपरमांगतिम् । अधुनाकथयिष्यामिव्र
तानितवसुव्रत ३६ नारीभिश्चनरैश्चैव कर्तव्यानिप्रयत्नतः । व्रतमनंततृतीया
ख्यंरसकल्याणिनीव्रतम् ३७ आर्द्रानन्दकरीनाम्न्यांतृतीयायांव्रतंचयत् । शुक्रवा
रव्रतंचैवतथाकृष्णचतुर्दशी ३८ भौमवारव्रतंचैवप्रदोषव्रतमेवच । यत्रदेवोमहा
देवोदेवींसंस्थाप्यविष्टरे ३९ नृत्यंकरोतिपुरतःसार्द्धंदेवैर्निशामुखे । तत्रोपोष्यर
जन्यादौप्रदोषेपूजयेच्छिवाम् ४० प्रतिपक्षंविशेषेणतद्देवीप्रीतिकारकम् । सोमवारव्र
तंचैवममातिप्रियकृन्नग ४१ तत्रापिदेवींसंपूज्यरात्रौभोजनमाचरेत् । नवरात्रद्व
येचैवव्रतंप्रीतिकरंमम ४२ एवमन्यान्यपिविभोनित्यनैमित्तिकानिच । व्रतानिकुरु
तेयोवैमत्प्रीत्यर्थंविमत्सरः ४३ प्राप्नोतिममसायुज्यंसमेभक्तःसमेप्रियः । उत्सवान

सुखेतस्मात्प्रदोष व्रतंदेव्याः शिवस्यचसिद्धं ४० नवरात्रद्वयेचैवेति तत्रशारदंवासंतिकंच ४१ चका
रेणपूर्वोक्तमपि माघाषाढस्थं नवरात्रद्वयंग्राह्यं ४२ एवमन्यान्यपीतिअन्यान्यपि आंगललितात्रतादीनिव्र

तानिपुराणान्तरेष्वप्युक्तानीत्यर्थः ४३ दोलोत्सवमुखानिति तद्विधिश्चतत्रैवोक्तः देवीपुराणेचैत्रशुक्लतृती
यायांकुर्याद्दोलोत्सवंबुधः तृतीयायांजपेद्देवीं शंकरेणसमन्विताम् कुंकुमागरुकर्पूरमणिवस्त्रसुगंधकैः स्रग्
गंधधूपदीपैश्चदमनेनविशेषतः आंदोलयेत्ततोवत्सशिवोमातुष्टयेसदिति ४४ शयनोत्सवमिति तत्काल
श्चवामनपुराणेउक्तः आषाढपौर्णमासीतउत्तरायातृतीयातद्रूपः तथाजागरणोत्सवकालश्चकार्त्तिकपौ
र्णमासीतमुत्तरायातृतीयातद्रूपः शयनोत्सवविधिर्जागरणोत्सवविधिश्चसर्वदेवतासुसमानोदेवता भेदे
नैव कालभेद एवकेवलंभिन्नः सर्वंचेदंवामनपुराणे स्पष्टंरथोत्सवमितितद्विधिश्चोमासंहितायां शिवपुरा

पिकुर्वीतदोलोत्सवमुखान्विभो ४४ शयनोत्सवंतथाकुर्यात्तथाजागरणोत्सवम् । र
थोत्सवंचमेकुर्याद्दमनोत्सवमेवच ४५ पवित्रोत्सवमेवापिश्रावणेप्रीतिकारकम् । म
मभक्तःसदाकुर्यादेवमन्यान्महोत्सवान् ४६ मद्भक्तान्भोजयेत्प्रीत्यातथाचैवसुवासि

णेत्राषाढशुक्लपक्षीयतृतीयायां रथोत्सवदेव्याः प्रियतमंकुर्याद्यथावित्तानुसारतः रथंपृथ्वींविजानीयात्
रथाङ्गेचन्द्रभास्करौ वेदानश्वान्विजानीयात्सारथिंपद्मसंभवं नानामणिगणाकीर्णंपुष्पमालाविराजितं ए
वंरथंकल्पयित्वातस्मिन्संस्थापयेच्छिवां लोकसंरक्षणार्थायलोकस्रष्टुंपरांविका रथमध्येसंस्थितेति भावये
न्मतिमान्नरः रथेप्रचलितेमंदंजयशब्दमुदीरयेत् पाहिदेविजनानस्मान्प्रपन्नान्दीनवत्सलेइतिवाक्यैःस्तो
पयेच्चनानावादित्रनिस्वनैः सीमांतेतुरथंनीत्वातत्रसंपूजयेद्रथे नानास्तोत्रैस्ततः स्तुत्याप्यानयेत्तांस्ववेश्म
नीतिदमनोत्सवश्चैत्रपौर्णमास्यांतद्विधिश्चधर्मशास्त्रेतंत्रेषुचप्रसिद्धएव ४५ पवित्रोत्सवेति सचश्रावण

पौर्णमास्यांतद्विधिश्चधर्मशास्त्रेतंत्रेचप्रसिद्धएव ४६ । ४७ कुसुमादिभिः कुसुमादिभिरेतान् कुमारीवटुक
ब्राह्मणान् पूजयेदित्यर्थः ४८ । ४६ । ५० ॥

इतिश्रीदेवीभागवततिलकेसप्तमस्कंधेदेवीगीतायामष्टत्रिंशोऽध्यायः ३८ ॥

नीः । कुमारीवटुकांश्चैवमद्बुध्यामद्गतांतरः ४७ वित्तशाठ्येनरहितोयजेत्तान्कुसु
मादिभिः । यएवंकुरुतेभक्त्याप्रतिवर्षमतंद्रितः ४८ सधन्यःकृतकृत्योसौमत्प्रीतेःपा
त्रमंजसा । सर्वमुक्तंसमासेनममप्रीतिप्रदायकम् ४६ नाशिष्यायप्रदातव्यंनाभक्ता
यकदाचन ५० ॥

इतिश्रीदेवीभागवतेमहापुराणेसप्तमस्कंधेदेवीगीतायामष्टत्रिंशोऽध्यायः ३८ ॥

श्रीहिमालयउवाच ॥ देवदेविमहेशानिकरुणासागरेंबिके।ब्रूहिपूजाविधिंसम्यक्य
थावदधुनानिजम् १ श्रीदेव्युवाच॥वक्ष्येपूजाविधिंराजन्नम्बिकायायथाप्रियम् । अत्यं

सप्ताधिकैश्चचत्वारिंशत्पद्यैरथपूजनं भगवत्याकथ्यतेत्रयेनदेवीप्रसीदति १ पूर्वंबहुषुस्थानेषुपूजामहिमानंश्रु
त्वापूजाविधिंपृच्छतिदेवदेवीति १ मूर्तिभेदेनवक्ष्यमाणेन वेदोक्तदीक्षसमन्विते वैदिकैर्वैदिकोवेदोक्तप्रकारपूज्य
कर्तव्येत्यर्थः साचाविराट्स्वरूपस्य पूर्वंदेव्यादर्शितस्य ध्यानरूपाप्रथमाद्वितीयानुकरचरणादि विशिष्टांसुकु ७५

विसर्जनांतंकुर्यादिति।द्वितीयापूजात्येवंमूर्तिभेदेनवैदिकी मारांभगवतींमूर्तिंध्यात्वा वेदोक्तमंत्रैरावाहनादि पूजाद्विविधेत्यर्थः२।३।४तांत्रिक्याअधिकारिणमाह तन्त्रोक्तेतिकुंडमंडपादिपुरःसरतांत्रिकमंत्रैर्दीक्षां कुर्वद्भि स्तांत्रिकी तंत्रोक्तविधिपूजाकर्त्तव्येत्यर्थः नज्ञात्वेतियस्ययस्यां पूजायामधिकारस्तन्नज्ञात्वेत्यर्थः विपरीत कंवैदिकस्तांत्रिकंकरोति तांत्रिकोवैदिकंकरोतीत्येवंरूपंयःकरोतिमूढः सपतत्येवनरकादिष्वितिशेषः तथा

तश्रद्धयासार्द्धंशृणुपर्वतपुंगव २ द्विविधाममपूजास्याद्बाह्याचाभ्यंतरापिच । वाह्यापि द्विविधाप्रोक्तावैदिकीतांत्रिकीतथा ३ वैदिकीचापिद्विविधामूर्तिभेदेनभूधर । वैदिकी वैदिकैःकार्यावेददीक्षासमन्वितैः ४ तंत्रोक्तदीक्षावद्भिस्तुतांत्रिकीसंश्रिताभवेत् । इत्थं पूजारहस्यंचनज्ञात्वाविपरीतकम् ५ करोतियोनरोमूढःसपतत्येवसर्वथा । तत्रयावै दिकीप्रोक्ताप्रथमातांवदाम्यहम् ६ यन्मेसाक्षात्परंरूपंदृष्टवानसिभूधर।अनन्तशीर्ष नयनमनंतचरणंमहत्७ सर्वशक्तिसमायुक्तंप्रेरकंयत्परात्परम् । तदेवपूजयेन्नित्यंनमे द्ध्यायेत्स्मरेदपि ८ इत्येतत्प्रथमाचार्यैःस्वरूपंकथितंनग । शान्तःसमाहितमनाद

चश्रुतिः योवैस्वांदेवतामतिजयते तस्यायैदेवतायै च्यवतेनपरांप्राप्नोतिपापीयान्भवतीति अतिजयतेत्य जाति च्यवतेगृह्णाति स्वांदेवतामिति स्वोचितमार्गोपलक्षणं ५ तत्रवैदिक्यर्च्चाया एवस्वरूपंप्राशस्त्यचवद ति तत्रयावैदिकीतिप्रथमेति वैदिकीतांत्रिकीतथेति वाक्योक्ताप्रथमा वैदिकीत्यर्थः ६।७।८ शांत्यादि

युक्तोवैदिकीं पूजांकुर्यादित्याहशान्तः समाहितइति ९ तत्परस्तन्मना विराट्स्वरूपमेव परमुत्कृष्टंयस्यस तत्परः १० मामेवविराट्स्वरूपां ११ । १२ । १३ ननुतर्हिकेवलंकर्मनिरर्थकमितिचेन्नेत्याह धर्मात्संजाय तेभक्तिरिति यदिकर्मनाचरितंतदा पापक्षयाभावात् भक्तिरेवदुर्लभास्यात्भक्तेरभावाज्ज्ञानपरब्रह्मपरत्वं दुर्लभं स्यादिति कर्माचरणंसार्थकमेवेतिभावः परमितिज्ञानमित्यर्थः १४तच्चकर्मनान्यशास्त्रोदितंकिन्तुवेदोक्तमे

म्भाहंकारवर्जितः ९ तत्परोभवतद्याजीतदेवशरणंव्रज । तदेवचेतसापश्यंजपध्याय स्वसर्वदा १० अनन्ययाप्रेमयुक्तोभक्त्यामद्भावमाश्रितः । यज्ञैर्यजतपोदानैर्मामेवप रितोषय ११ इत्थंममानुग्रहतोमोक्ष्यसेभवबंधनात् । मत्परायेमदासक्तचित्ताभक्ताव रामताः १२ प्रतिजानेभवादस्मादुद्धराम्यचिरेणतु । ध्यानेनकर्मयुक्तेनभक्तिज्ञानेन वापुनः १३ प्राप्याहंसर्वथाराजन्नतुकेवलकर्मभिः । धर्मात्संजायतेभक्तिर्भक्त्यासंजा यतेपरम् १४ श्रुतिस्मृतिभ्यामुदितंयत्सधर्मःप्रकीर्तितः । अन्यशास्त्रेषुयःप्रोक्तोधर्मा भासःसउच्यते १५ सर्वज्ञात्सर्वशक्तेश्चमत्तोवेदःसमुत्थितः । अज्ञानस्यममाभा वादप्रमाणानचश्रुतिः १६ स्मृतयश्चश्रुतेरर्थंगृहीत्वैवचनिर्गताः । मन्वादीनांस्मृती

वेत्याह श्रुतिस्मृतिभ्यामुदितमिति यदुदितंकर्मसधर्मइत्यर्थः १५ किमितिवेदोक्तएवधर्मो नान्यशास्त्रो दितइतिचेत्तत्राह सर्वज्ञादिति सर्वज्ञात्सर्व शक्तेमत्तोमत्स्वरूपाद्वेदः समुत्थितस्तदाममज्ञानाभावाद्यन्म योक्तं तत्सत्यमेवेति श्रुतिर्नाप्रमाणावेदातिरिक्तशास्त्राणि त्वसर्वज्ञपुरुषबुद्धिकल्पितानितत्रचाज्ञप्रणी

तत्वादप्रमाणादेवेति तदुक्तोधर्मोधर्माभासोवेदोक्तएवतुधर्मइत्यर्थः १६ ननुमन्वादिस्मृतीनामप्येवं श्रीत्वाप्रामाण्याभावआगच्छेत् चेत्तत्राहस्मृतयश्चेतिश्रुत्यर्थः एवतुस्मृतिभिरुच्यते ततोमूलभूतश्रुतेः प्रामाण्यात् तन्मूलकस्मृतीनामपि प्रामाण्यमव्याहतमेवेत्यर्थः १७ ननुमन्वादिस्मृतीनां पुराणानांचसप्रामाण्यत्वे तत्तमुद्राभिधानस्य वामाचारादिवेदविरुद्धाचारस्यच पुराणस्मृतिपुसत्वान् ग्राह्यत्वंस्यादिति चेत्तत्राह क्वचित्कदाचिदिति तंत्रार्थकटाक्षेण तंत्रार्थावलोकनेन परोदितंवेदातिरिक्तशास्त्रोदितमपिधर्मं वदन्ति

नाऽन्यततःप्रामाण्यमिष्यते १७ क्वचित्कदाचित्तंत्रार्थकटाक्षेणपरोदितम्। धर्मंवदंति सोंशस्तुनैवग्राह्योस्तिवैदिकैः १८ अन्येषांशास्त्रकर्तॄणामज्ञानप्रभवत्वतः । अज्ञानदोषदुष्टत्वात्तदुक्तेर्नप्रमाणता १९ तस्मान्मुमुक्षुर्धर्मार्थंसर्वथावेदमाश्रयेत् । राजाज्ञाचयथालोकेहन्यतेनकदाचन २० सर्वेशान्याममाज्ञासाश्रुतिस्त्याज्याकथंनृभिः । मदाज्ञारक्षणार्थंतुब्रह्मक्षत्रियजातयः २१ मायासृष्टास्ततोज्ञेयंरहस्यंमेश्रुतेर्वचः । य

सधर्मः प्रत्यक्षः श्रुतिविरोधात्तैरुक्तोपिन वैदिकैर्ग्राह्यइत्यर्थः १८ तत्रहेतुमाह अन्येषांशास्त्रकर्तॄणामिति १९ । २० सर्वेशान्याः सर्वेश्वर्याममसाश्रुतीं राजाज्ञास्तिसानृभिः कथंत्याज्येत्यर्थः तथाचकूर्मपुराणे देवीवाक्यंद्वादशाध्याये ममैवाज्ञापराशक्तिः वेदशक्तिःपुरातनी ऋग्यजुःसामरूपेण सर्गादौसंप्रवर्तते इतिमदाज्ञाभूतवेदरक्षणार्थं मयामहान् यत्नः कृतोस्तीत्याहमदाज्ञेति २१ ततस्तस्माद्धेतोर्ज्ञेयं श्रुतेर्वचोमेममरह

स्यमस्तीति २२ वेषान् शाकंभर्यादि रामकृष्णाद्यवतारान् अतएवेतिवेदमंत्ररक्षकादेवाः तन्नाशकादैत्या इति विभागोवेदसद्भावादेवजातइत्यर्थः २३ । २४ । २५ ननुतर्हिकिमर्थं तंत्राणिशिवेन प्रणीतानीतिचे त्तत्राह अन्यानियानीति २६ तेषांनामान्याह वामंकपालिकमिति २७ पापिनांवेदधर्माचरणेसद्गतिः स्या

दायदाहिधर्मस्यग्लानिर्भवतिभूधर २२ अभ्युत्थानमधर्मस्यतदावेषान्बिभर्म्यहम्। देवदैत्यविभागश्चाप्यतएवाभवन्नृप २३ येनकुर्वन्तितद्धर्मंतच्छिक्षार्थंमयासदा। स म्पादितास्तुनरकास्त्रासोयच्छ्रवणाद्भवेत् २४ योवेदधर्ममुज्झित्यधर्ममन्यंसमाश्रये त्। राजाप्रवासयेद्देशान्निजादेतानधर्मिणः २५ ब्राह्मणैर्नचसंभाष्याःपंक्तिग्राह्यान चद्विजैः। अन्यानियानिशास्त्राणिलोकेस्मिन्विविधानिच २६ श्रुतिस्मृतिविरुद्धानि तामसान्येवसर्वशः। वामंकापालिकंचैवकौलिकंभैरवागमः २७ शिवेनमोहनार्थाय प्रणीतोनान्यहेतुकः। दक्षशापाद्भृगोःशापाद्दधीचस्यचशापतः २८ दग्धायेब्राह्मणव रावेदमार्गबहिष्कृताः। तेषामुद्धरणार्थायसोपानक्रमतःसदा २९ शैवाश्चवैष्णवा

दितिकर्मवैचित्र्या भावात्प्रपंचवैचित्र्यं नस्यादितितेषां नानाफलप्रदर्शनेन तत्रप्रवृत्तयेमोहार्थमेव वेदश्र द्धाप्रच्युत्यर्थंतंत्राणिप्रणीतानीत्यर्थःकिंचशापदग्धानांवेदबहिष्कृतानां ब्राह्मणानांसोपानक्रमेणजन्मांतरेवे दाधिकारप्राप्त्यर्थं किंचित्परमेश्वरोपासनं वक्तव्यमिति तदनुग्रहार्थंच तंत्राणिप्रणीतानीत्याह दक्षशापा

दितिशापकथाचकूर्मपुराणे सूतसंहितायामस्मिन्द्वादशस्कंधेच प्रसिद्धासुराणांतरेषुच २८ । २९ । ३० न नुतर्हितंत्राणिसर्वथात्याज्यानीतिपर्यवसान्निमितिचेन्नेत्याह तत्रवेदाविरुद्धांशइति तंत्रेषुद्विविधोंशोस्ति एकोवेदविरुद्धोद्वितीयोवेदाविरुद्धस्तत्रवैदिकैर्वेदाविरुद्धांशस्त्याज्यो वेदाविरुद्धांशस्तुग्राह्यइत्यर्थः तदु क्तंवायुसंहितायां शैवागमोपिद्विविधः श्रौताश्रौतश्चतन्मयः श्रुतिसारगमश्रौतः स्वतंत्रइतरोमताइत्या

इचैवसौराःशाक्तास्तथैवच । गाणपत्याश्चागमाश्चप्रणीताःशंकरेणतु ३० तत्रवेद विरुद्धांशोप्युक्तएवक्वाचित्क्वचित् । वैदिकैस्तद्ग्रहेदोषोनभवत्येवकर्हिचित् ३१ सर्व थावेदभिन्नार्थेनाधिकारीद्विजोभवेत् । वेदाधिकारहीनस्तुभवेत्तत्राधिकारवान् ३२ त स्मात्सर्वप्रयत्नेनवैदिकीवेदमाश्रयेत् । धर्म्मेणसहितंज्ञानंपरंब्रह्मप्रकाशयेत् ३३ स र्वैषणाःपरित्यज मामेवशरणंगताः । संन्यासिनोवनस्थाश्चगृहस्थाब्रह्मचारिणः ३४ सर्वभूतदयावन्तोमानाहंकारवर्जिताःमच्चित्तामद्गतप्राणामत्स्थानकथनेरताः ३५ उपासन्तेसदाभक्त्यायोगमैश्वरसंज्ञितम् । तेषांनित्याभियुक्तानामहमज्ञानजंतमः ३६

दि श्रौतोग्राह्यस्तुवैदिकैरिति सूतसंहितायामपि तथापियेंशोमार्गाणां वेदेननविरुद्ध्यतेसोंशः प्रमाण मित्युक्तमिति ३१ । ३२ यस्माद्वेदोक्तएवधर्मस्तस्माद्वेदमेवाश्रयेदित्याह तस्मादितिधर्मेणवेदोक्तेन ३३ पुनर्विराट्स्वरूपोपासकनिष्ठामाह सर्वैषणाइति ३४ । ३५ ऐश्वर्यसंज्ञितंविराट्स्वरूपो पासनाभिधं ३६

प्रथमवैदिकपूजास्वरूपकथनमुपसंहरति इत्थमिति ३७ वेदमार्गेणकरचरणादिविशिष्टसुकुमार मूर्तिपूजारूपाया द्वितीयवैदिकपूजायाः स्वरूपमाहद्वितीयायाइति ३८ महापटेपट्टवस्त्रे ३९ सुकुमारांमूर्तिमाह सगुणामिति ४० । ४१ । ४२ इत्थंवाह्यपूजाकियत्कालपर्यन्तंकर्तव्येति चेत्तत्राह यावदान्तरेति आन्तरपू

ज्ञानसूर्यप्रकाशेननाशयामिनसंशयः । इत्थंवैदिकपूजायाःप्रथमायानगाधिप ३७
स्वरूपमुक्तंसंक्षेपाद्द्वितीयायाअथोब्रुवे । मूर्त्तौवास्थंडिलेवापितथासूर्येंदुमंडले ३८
जलेथवाबाणलिंगेयंत्रेवापिमहापटे । तथाश्रीहृदयांभोजेध्यात्वादेवींपरात्पराम् ३९
सगुणांकरुणापूर्णांतरुणीमरुणारुणाम् । सौंदर्यसारसीमांतांसर्वावयवसुंदराम् ४०
शृंगाररससम्पूर्णांसदाभक्तार्त्तिकातराम् । प्रसादसुमुखीमंबांचंद्रखंडशिखंडिनीम् ४१
पाशांकुशवराभीतिधरामानंदरूपिणीम् । पूजयेदुपचारैस्तुयथावित्तानुसारतः ४२
यावदांतरपूजायामधिकारोभवेन्नहि । तावद्बाह्यामिमांपूजांश्रयेज्जातेतुतांत्यजेत् ४३
अभ्यंतरातुयापूजासातुसंविल्लयःस्मृतः । संविदेवपरंरूपमुपाधिरहितंमम ४४ अ
तःसंविदिमद्रूपेचेतःस्थाप्यनिराश्रयम् । संविद्रूपातिरिक्तंतुमिथ्यामायामयंजगत् ४५

जायामधिकारेजातेइत्यर्थः तदुक्तंसूतसंहितायां पंचमाध्यायेशक्तिपूजाप्रकरणे । अथाभ्यंतरपूजायामधिकारोभवेद्यदि त्यक्त्वावाह्यामिमां पूजामाश्रयेदपरांवुधइति ४३ आन्तरपूजास्वरूपमाह अभ्यंतरेतिसंविदि

ज्ञानरूपेब्रह्मणि मयियश्चेतसोलयस्तद्रूपेत्यर्थः ४४ । ४५ निर्मनस्केननिर्विकल्पेन योगयुक्तेनभक्तियोगयुक्तेन ४६ इयंयामूर्तौपूजासंक्षेपेणोक्ता तांविस्तरेणवक्तुंप्रतिजानीतेअतःपरमिति ४७ ॥

इतिश्रीदेवीगीतायांएकोनचत्वारिंशोऽध्यायः ३९ ॥

अतःसंसारनाशायसाक्षिणीमात्मरूपिणीम् । भावयेन्निर्मनस्केनयोगयुक्तेनचेतसा ४६

अतःपरंवाह्यपूजाविस्तरःकथ्यतेमया । सावधानेनमनसाशृणुपर्वतसत्तम ४७

इतिश्रीदेवीगीतायांएकोनचत्वारिंशोऽध्यायः ३९ ॥

श्रीदेव्युवाच ॥ प्रातरुत्थायशिरसिसंस्मरेत्पद्ममुज्ज्वलम् । कर्पूराभंस्मरेत्तत्रश्रीगुरुंनिजरूपिणम् १ सुप्रसन्नंलसद्भूषाभूषितंशक्तिसंयुतम् । नमस्कृत्यततोदेवींकुंडलींसंस्मरेद्बुधः २ प्रकाशमानांप्रथमेप्रयाणेप्रतिप्रयाणेप्यमृतायमानाम् । अन्तःपदव्यामनुसंचरंतीमानन्दरूपामबलांप्रपद्ये ३ ध्यात्वैवंतच्छिखामध्ये सच्चिदानन्दरूपि

पंचाधिकैश्चचत्वारिंशद्भिःपद्यैरतः परंवाह्यपूजाविधानञ्चयथावदभिधीयते वाह्यपूजांवक्तुमुपक्रमते प्रातरुत्थायेति अष्टपंचभवेत्प्रातरितिधर्मशास्त्रोक्तेः प्रातःकालेइत्यर्थः शिरसिस्वमस्तके ब्रह्मरंध्रेपद्मंसहस्रारंतत्रतस्मिन्पद्मेनिजरूपिणं निजगुरुसमानाकारमित्यर्थः १ शक्तिसंयुतंस्वपत्नीसंयुतंप्रातरेवगुरुन्तंपत्नीसंयुतंध्यायेत् २ प्रकाशमानामितिप्रथमेप्रयाणेब्रह्मरंध्रगमनरूपे प्रकाशमानां चिद्रूपेणभासमानांप्रतिप्रयाणेब्रह्मरंध्रान्मूलाधारं पुनरागमने अमृतायमानां आनन्दामृतरसपूरितोअन्तःपदव्यांसुषुम्ना

यामनुसंचरन्तीं गमनागमने कुर्वतीमत्रतांपराशक्तिंप्रपद्येशरणंगतोस्मिइत्यर्थः नात्रेयतेत्रलयस्याः सका शादन्यत्रेत्यबलाइत्थंयोगिभिः कुंडलिनीसाक्षात्कर्त्तव्यायोगाभावेभावना कर्त्तव्या ३ तच्छिखामध्ये सायाशिखामूलाधारस्थचिदग्नेः शिखाकुंडलिनीतस्याः शिखायामध्येपरमात्माव्यवस्थित इति तैत्तिरी यश्रुत्युक्तांतन्मध्येमांसच्चिदानन्दरूपिणीं ध्यायेदित्यर्थः सर्वाःक्रियाः सन्ध्यावन्दनान्ताः ४ होमान्ते मत्प्रीत्यर्थं मग्निहोत्रहोमान्ते इत्यर्थः ५ भूतशुद्धिमातृकान्यासौप्रसिद्धौगौरवान्नलिख्येते हृल्लेखामा

णीम् । संध्यायेदथशौचादि क्रियासर्वाःसमापयेत् ४ अग्निहोत्रंततोहुत्वा मत्प्रीत्यर्थं द्विजोत्तमः । होमांतेस्वासनेस्थित्वा पूजासंकल्पमाचरेत् ५ भूतशुद्धिंपुराकृत्वामातृ कान्यासमेवच । हृल्लेखामातृकान्यासं नित्यमेवसमाचरेत् ६ मूलाधारेहकारंच हृद येचरकारकम् । भ्रूमध्येतद्वदीकारं ह्रींकारंमस्तकेन्यसेत् ७ तत्तन्मंत्रोदितानन्या न्न्यासान्सर्वान्समाचरेत् । कल्पयेत्स्वात्मनोदेहेपीठंधर्मादिभिःपुनः ८ ततोध्यायेन्म

तृकेतिहृल्लेखामायाबीजं प्रत्यक्षरंमायाबीजं पूर्वंदत्त्वामातृकान्यासोयः कर्त्तव्यः सहृल्लेखामातृकान्यासः शारदायांदशविधमातृकान्यासेषुप्रसिद्धः ६ । ७ धर्मादिभिरिति धर्मज्ञानवैराग्यैश्वर्यादिविदिक्षुपीठगात्रत्वे नभावयेत् अधर्माज्ञाना वैराग्यानैश्वर्याणिपूर्वादि चतुर्दिक्षुपीठगात्रत्वेनभावयेत् तत्पीठोपरिमध्येनंता यनमः पद्मायनमः अंसूर्यमंडलायनमः ओंसोममंडलायनमः वंवह्निमंडलायनमः संसत्वायनमः रंर जसेनमः तंतमसेनमः पूर्वादिदिक्षु आंआत्मनेनमः अंअन्तरात्मनेनमः पंपरमात्मनेनमः ह्रींज्ञानात्मने

नमः ततःपद्मस्यपूर्वादिदले जयायैनमः विजयायैनमः अजितायैनमः अपराजितायैनमः नित्यायैनमः विलासिन्यैनमः दोग्ध्र्यैनमः अघोरायैनमः मध्येमंगलायैनमः इतिपीठशक्तिंपूजयेत् इदंशारदा तिलके स्पष्टं ८ ततःप्राणायामैर्विकसितेहृत्पद्मे पंचप्रेतासनेदेवींध्यायेदित्याह ततोध्यायेदिति ९ पंचप्रेतानाह ब्रह्माविष्णुश्चेति १० किमर्थमेतेत्वदासनतांगता इतितत्राह पंचभूतात्मकाह्येतेइति भूम्यादिपंच भूतानामेतेधिपतयोहंतु देवीतेषामुत्पादकं यदव्यक्तंमायाविशिष्टं ब्रह्मतद्रूपिणीतेभ्योधिकातथाते ब्र

हादेवींप्राणायामैर्विजृम्भते । हृदंभोजेममस्थाने पंचप्रेतासनेबुधः ९ ब्रह्माविष्णुश्च रुद्रश्चईश्वरश्चसदाशिवः । एतेपंचमहाप्रेताःपादमूलेममस्थिताः १० पञ्चभूतात्मकाह्येतेपञ्चावस्थात्मकाअपि । अहंत्वव्यक्तचिद्रूपातदतीतास्मिसर्वथा ११ ततोविष्टरतांयाताःशक्तितंत्रेषुसर्वदा । ध्यात्वैवंमानसैर्भोगैःपूजयेन्मांजपेदपि १२ जपंसमर्प्यश्रीदेव्यै ततोर्घ्यस्थापनंचरेत् । पात्रासादनकंकृत्वापूजाद्रव्याणिशोधयेत् १३ जलेनतेनमनुना चास्त्रमंत्रेणदेशिकः । दिग्बंधनंपुराकृत्वागुरून्नत्वाततःप

ह्मादयोजाग्रत्स्वप्नसुषुप्तितुर्यातीतरूपपंचावस्थाधिपतयोहंतुदेवीतुर्यातीताव स्थातोप्यधिकेयद्ब्रह्मतद्रूपिणीतस्मात्तेमम्मासनगताइत्यर्थः ११ तत्रब्रह्मादयश्चत्वारोमंचकखुराः सदाशिवस्तुफलकस्थानीयः कल्पनीयइतिबोध्यएवंहृदयेप्रथमतोध्यात्वामानसोपचारैः पूजयित्वायथाशक्तिमूलमंत्रं जपित्वाजपंदेव्यैसमर्प्यबाह्यपूजामर्घ्यस्थापनं चरेदित्याहध्यात्वेवमिति १२ अर्घ्यस्थापनप्रकारः शारदायांद्रष्टव्योगौ

रवास्त्रेहोच्यते१३अस्त्रमंत्रेणफलमंत्राभ्युक्षितजलेनपूजाद्रव्याणिशोधयेदित्यर्थः दिग्बंधनमितिफट्मंत्रेणस्व परितोग्निप्रकारंभावयेदित्यर्थः१४वाह्यपीठेपूर्वोक्तेयंत्रादौ१५प्राणस्थापनविधयाप्राणप्रतिष्ठातंमंत्रेण१६।१७ पुष्पान्तपूजांकृत्वा यंत्रस्थानामावृतीनामावरणदेवतानांपूजनंकुर्यादित्याह यन्त्रस्थानामिति ताश्चदेव तास्तत्तन्मन्त्रकल्पोक्तायाह्याः प्रतिवारमिति प्रतिदिनमावरणदेवतापूजनंकर्त्तुमशक्तश्चेत् शुक्रवारेवश्यंकु

रम् १४ तदनुज्ञांसमादायवाह्यपीठेततःपरम् । हृदिस्थांभावितांमूर्त्तिममदिव्यांमनो
हराम् १५ आवाहयेत्ततःपीठेप्राणस्थापनविधया । आसनावाहनेचार्घ्यंपाद्याद्यांचम
नंतथा १६ स्नानंवासोद्वयंचैवभूषणानिचसर्वशः । गंधंपुष्पंयथायोग्यंदत्वादेव्यैस्व
भक्तितः १७ यन्त्रस्थानामावृतीनांपूजनंसम्यगाचरेत् । प्रतिवारमशक्तानांशुक्रवारो
नियम्यते १८ मूलदेवीप्रभारूपाः स्मर्त्तव्याअंगदेवताः । तत्प्रभापटलाव्याप्तंत्रैलो
क्यंचाविचिंतयेत् १९ पुनरावृत्तिसहितांमूलदेवींचपूजयेत् । गंधादिभिःसुगन्धैस्तुत
थापुष्पैःसुवासितैः २० नैवेद्यैस्तर्पणैश्चैवतांबूलैर्दक्षिणादिभिः । तोषयेन्मांत्वत्कृतेन
नाम्नांसाहस्रकेणच २१ कवचेनचसूक्तेनाहंरुद्रेभिरितिप्रभो । देव्यथर्वशिरोमंत्रैर्ह

यादित्यर्थः १८ आवरणदेवतासुभावनामाह मूलदेवीति १९ पुनरावृत्तीति इत्थमावरणदेवतायथास्थाने षुस्थिता ध्यात्वासंपूज्यपुनःसावरणांसायुधांसशक्तिकां श्रीभुवनेश्वरींगन्धादिदक्षिणां तैरुपचारैःपूजयेदि त्यर्थः २० त्वत्कृतेनेतित्वयाहिमालयेनकृतं यत्सहस्रनामस्तोत्रंममतेन मांतोषयेदित्यर्थः अनेनैवज्ञापकेन

हिमालयेन देवीदर्शनेजाते सहस्रनामस्तोत्रेण देवीस्तुतेतिबोधितं तच्चसहस्रनामस्तोत्रं यद्यप्यस्मिन्पुरा
णेनास्ति तथापिकूर्मपुराणेपिद्वादशाध्यायेवर्त्तते तद्ग्राह्यंतत्राप्येतत्प्रसंगेनैव सहस्रनामकथनात् चकारे
णमूलमंत्रजपंकृत्वा पश्चात्सहस्रनामस्तोत्रंपठेदित्यर्थः २१ कवचेनतंत्रादिसूक्तेन अहंरुद्रेभिरितिदेवीसू
क्तेनेत्वन्वयः देव्यथर्वशिरोवामसर्वे वैदेवादेवीमुपतस्थुरित्यादिके हृल्लेखोपनिषत्भुवनेश्वर्युपनिषत् २२।

ल्लेखोपनिषद्भवैः २२ नानाविधैर्महामंत्रैस्तोषयेन्मांमुहुर्मुहुः । क्षमापयेज्जगद्धात्रींप्रे
मार्द्रहृदयोनरः २३ पुलकांकितसर्वांगोबाष्परुद्धाक्षिनिस्वनः । नृत्यगीतादिघोषेण
तोषयेन्मांमुहुर्मुहुः २४ वेदपारायणैश्चैवपुराणैःसकलैरपि । प्रतिपाद्यायतोहंवैत
स्मात्तैस्तोषयेत्तुमाम् २५ निजंसर्वस्वमपिमेसदेहंनित्यशोर्पयेत् । नित्यहोमंततःकुर्या
त्ब्राह्मणांश्चसुवासिनीः २६ वटुकान्पामरानन्यान्देवीबुद्ध्यातुभोजयेत् । नत्वापुनःस्व
हृदयेव्युत्क्रमेणाविसर्जयेत् २७ सर्वंहृल्लेखयाकुर्यात् पूजनंममसुव्रत । हृल्लेखासर्वमं
त्राणांनायिकापरमास्मृता २८ हृल्लेखादर्पणेनित्यमहंतुप्रतिबिंबिका । तस्माद्धृल्ले
खयादत्तंसर्वैमंत्रैःसमर्पितम् २९ गुरुंसंपूज्यभूषाद्यैःकृतकृत्यत्वमावहेत् । यएवं

२३ । २४ । २५ सर्वस्वमपीतिस्वदेहसहितं सर्वस्वंदेव्यैसमर्पयेदित्यर्थः २६ व्युत्क्रमेणसंहारमुद्रया २७ पू
र्वपूजायांयेउपचारादेयास्ते चासनेमायाबीजमंत्रमुच्चार्य्यदेया इत्याहसर्वंहृल्लेखयेति २८ कुतःसर्वमंत्राणां
नायिकेतिचेन्ममप्रत्यासत्यतिशयादित्याहहृल्लेखादर्पणे इतितथाचब्रह्माण्डपुराणे ह्रींकारादर्शप्रतिबिंबि

तेति २९ । ३० । ३१ । ३२ । ३३ । ३४ उरोजयोः स्तनयोः ३५ । ३६ । ३७ । ३८ ततोदेवीवरप्रदानानंत
रं ३९ इयंचगौर्य्युत्पत्तिर्ज्येष्ठशुक्लचतुर्थ्यांतदुक्तंकल्परत्नावल्यां॥ज्येष्ठशुक्लचतुर्थ्यांतुजातापूर्वमुमासती॥तस्मा

पूजयेद्देवींश्रीमद्भुवनसुंदरीम् ३० नतस्यदुर्लभंकिंचित्कदाचित्क्वचिदस्तिहि । दे
हान्तेतुमणिद्वीपंममयात्येवसर्वथा ३१ ज्ञेयादेवीस्वरूपोसौदेवानित्यंनमन्तितम् ।
इतितेकथितंराजन्महादेव्याःप्रपूजनम् ३२ विमृश्यैतदशेषेणाप्यधिकारानुरूप
तः । कुरुमेपूजनंयेनकृतार्थस्त्वंभविष्यसि ३३ इदन्तुगीताशास्त्रंमेनाशिष्यायय
देत्क्वचित् । नाभक्तायप्रदातव्यंनचधूर्त्तायदुर्हृदे ३४ एतत्प्रकाशनंमातुरुद्घा
टनमुरोजयोः । तस्मादवश्यंयत्नेनगोपनीयमिदंसदा ३५ देयंभक्तायशिष्याय
ज्येष्ठपुत्रायचैवहि । सुशीलायसुवेषायदेवीभक्तियुतायच ३६ श्राद्धकालेपठेदे
तद्ब्राह्मणानांसमीपतः । तृप्तास्तत्पितरःसर्वेप्रयान्तिपरमंपदम् ३७ व्यासउवाच
इत्युक्त्वासाभगवतीतत्रैवान्तरधीयत । देवाश्चमुदिताःसर्वेदेवीदर्शनतोभवन् ३८
ततोहिमालयेजज्ञेदेवीहैमवतीतुसा । यागौरीतिप्रसिद्धासीद्दत्तासाशंकरायच ३९
ततःस्कंदःसमुद्भूतस्तारकस्तेनपातितः । समुद्रमथनेपूर्वंरत्नान्यासन्नराधिप ४०

त्साततत्रसंपूज्या सर्वैःसौभाग्यहेतवे॥उपहारैश्चविविधैर्गीतनृत्योत्सवादिभिः । होमैःपयोभिर्वस्त्रैश्चपत्र
पुष्पैःसुगन्धिभिरितिसाचोत्पत्तिररुणोदयवेलायांतदुक्तंमात्स्येतारकासुरयुद्धप्रस्तावे॥ ततोजगत्परित्राणहे

तुंहिमगिरेःप्रियाब्राह्मेमुहूर्तेसुभगेप्रासूयतगुहारणिमितिइमांगौर्य्याउत्पत्तिंतस्याःशिवस्यप्राप्तिंचसविस्तरा
मुपवर्ण्यलक्ष्म्युत्पत्तिंतस्याविष्णुप्राप्तिंचसंक्षेपेणवदतिसमुद्रमथनेइति रत्नान्यासूरत्नान्युत्पन्नानीत्यर्थः ४०
तत्रेतितस्मिन्नपिसमयेदेवैर्देवीपराशक्तिः स्तुताकिमर्थंलक्ष्मीप्राप्त्यर्थमित्यर्थः ४१। ४२। ४३। ४४ विस्त
रस्तु मत्कृतदेवीगीताबृहट्टीकायांद्रष्टव्यः॥श्रीमच्छैवकुलोत्पन्नो रंगनाथात्मजःसुधीः। श्रीलक्ष्मीगर्भसंभूतो

तत्रदेवैःस्तुतादेवीलक्ष्मीप्राप्त्यर्थमादरात् । तेषामनुग्रहार्थायनिर्गतातुरमाततः
४१ वैकुण्ठायसुरैर्दत्तातेनतस्यसमोभवेत् । इतितेकथितंराजन्देवीमाहात्म्यमुत्त
त्तमम् ४२ गौरीलक्ष्म्योःसमुद्भूतिविषयंसर्वकामदम् । नवाच्यंतेतदन्यस्मैरहस्यंक
थितंयतः ४३ गीतारहस्यभूतंयंगोपनीयाप्रयत्नतः । सर्वमुक्तंसमासेनयत्पृष्ठंत
त्वयानघ ४४ पवित्रंपावनंदिव्यंकिम्भूयःश्रोतुमिच्छसि ४५ ॥

इतिश्रीदेवीभागवतेमहापुराणेष्टादशसाहस्र्यांसंहितायांसप्तमस्कंधेदेवीगी
तायांचत्वारिंशोऽध्यायः ४० ॥

नीलकण्ठोभिधानतः ॥ देवीभागवतस्यास्य व्याख्यानरहितस्यच । व्याख्यांयःकृतवान्सम्यक् तिलका
ख्यांमहत्तराम् सप्तमस्कंधएतस्याः समासोभूच्छुभार्थदः । प्रीयतांतेनमेनन्त कोटिब्रह्माण्डनायिका॥४५॥

इतिश्रीशैवकुलोत्पन्नरंगनाथात्मजलक्ष्मीगर्भसंभूतनीलकण्ठकृतेश्रीदेवीभागवततिलके
सप्तमस्कंधेदेवीगीतायांचत्वारिंशोऽध्यायः ॥ ४० ॥

## विष्णुपुराणभाषा वार्त्तिक ॥

इसका पंडित महेशदत्त सुकुलने भाषान्तर कियाहै जिसमें जगदुत्पत्ति, स्थिति, पालन, ध्रुव, पृथु आदि राजाओं की कथा, भूगोल, खगोल वर्णन धर्मशास्त्र, मन्वन्तरकथा, सूर्य औरसोमवंशी राजाओं का कथन इत्यादि बहुतसी कथायें संयुक्त हैं ॥

## विष्णुपुराण भाषा श्रीराजा अजीतसिंह वैकुण्ठवासीकृत ॥

जिसको श्रीराजा प्रतापबहादुरसिंह ताल्लुकदार व आनरेरी माजिस्ट्रेटव प्रेसीडेंटप्रतापगढ़ने छपवायाहै इसमें सम्पूर्ण विष्णुपुराण दोहा चौपाई इत्यादि अनेकप्रकारके ललित छन्दों में वर्णितहै कागज सफ़ेदहै॥

## भविष्यपुराण ॥

श्रीपंडित दुर्गाप्रसाद जयपुर निवासीकृत भाषा है--इसमें पौराणिक इतिहास, चारोंवर्णों के धर्म, स्त्री-शिक्षा व परीक्षा, व्रतोंके उद्यापन, शाकद्वीपीय ब्राह्मणोंकी उत्पत्ति, होनेवाले राजाओंका राज्य समय, गर्भिणी के धर्म, धेनुदान विधान, जलाशय, देवालय बनाने और वृक्ष लगाने का फल और सब प्रकार के दानोंका माहात्म्यआदि वर्णन किये गये हैं ॥

## शिवपुराण भाषा ॥

इसका पंडित प्यारेलालजी ने उर्दू से हिन्दी भाषा में भाषानुवाद किया है इसमें शिवजी के निर्गुण सगुण स्वरूप का वर्णन,सतीचरित्र, गिरिजा चरित्र, स्कन्दकथा, युद्धखण्ड, कारयुपाख्यान, शतरुद्रि

खण्ड, लिंगखण्ड, रुद्राक्ष व भस्ममाहात्म्य, व्रत विधि, भूगोल खगोल व आदिमें छवों शास्त्रों के मतकी भूमिका भी संयुक्त कीगई है ॥

## स्कन्दपुराणका सेतुमाहात्म्यखण्ड ॥

पंडित दुर्गाप्रसाद जयपुर निवासी का भाषा है इसमें सेतुबन्धका माहात्म्य वहांके सब तीर्थों का वैभव, महालयश्राद्ध का माहात्म्य, नरकों व रामेश्वर महादेव का बर्णन इत्यादि बहुतसी कथायें हैं ॥

## ब्रह्मोत्तरखण्ड भाषा ॥

जिसको पंडित दुर्गाप्रसाद जयपुर निवासी ने स्कन्दपुराणान्तर्गत संस्कृत ब्रह्मोत्तरखण्ड से देश भाषा में रचा जिसमें अनेक प्रकार के इतिहास और सम्पूर्ण व्रतों के माहात्म्य आदि वर्णित हैं ॥

## बारहोस्कन्ध श्रीमद्भागवत ॥

इसके भाषा टीकाको श्रीअंगदशास्त्रीजी ने अक्षर अक्षरके अर्थको ललित व्रजबोलीमें रचनाकिया है यह टीका ऐसा मनोहरहुआहै कि जिसकी सहायतासे थोड़ा भी जाननेवाला भागवतको अच्छीतरह से समझ सक्ताहै यह पुस्तक प्रत्येक विद्वान् के पास रहनी चाहिये क्योंकि भागवत बड़ी कठिन पुराण है बिना ऐसे सहज भाषा टीकाके सबको श्लोकार्थ नहीं समझ पड़ता है इसका मूल बीचमें और भाषा टीका नीचे ऊपर रखकर अत्यन्त शुद्धतासे पत्रेनुमा छपा है कागज हिनाई है और छापा पत्थर है॥